# वासिष्ठसंहिता-विनायकोदयः-लक्ष्मीविद्या

# VASISTHASAMHITA-VINAYAKODAYA

## LAKSHMEEVIDYA




**Edited with notes by**

Mimamsa-Sahitya-Dharmashastra-Jyotisha-Vidvan

**Nigamagamapravina**

**KOTA VASUDEVA SOMAYAJI**

**PROFESSOR OF DHARMASASTRA**

Maharaja Samskrita College

**MYSORE**



**1982**

# वासिष्ठसंहिता

# विनायकोदयः

# लक्ष्मीविद्या







मीमांसा-साहित्य-धर्मशास्त्र-ज्यौतिषविदुषा
निगमागमप्रवीणेन
श्रीमन्महाराजसंस्कृतमहापाठशाला
धर्मशास्त्रप्राध्यापकेन
कोट वासुदेवसोमयाजिना
संशोधिताः
लघुटिप्पण्या च समलङ्कृताः




१९०५

प्रकाशकः

के. वासुदेवसोमयाजी,

१४६९/१, कृष्णमूर्तिपुरम्, मैसूरु-५७० ००४





सप्तमं ग्रन्थरत्नं तु भागत्रयसमन्वितम् ।
गुरूणां पादपद्मेषु सप्रणामं समर्प्यते ॥

मूल्यं : विशेषरक्षापत्रस्य १५ रूप्यकाणि
सामान्यरक्षापत्रस्य १२ रूप्यकाणि

मुद्रक :

साम्राज्यम् मुद्रणालय, मैसूरु-४.



श्री महागणपतये नमः



## उपोद्घातः

भारतेऽस्मिन् धर्मप्रधाने लोका आस्तिकाः प्रायशः धर्मनिरताः। अत एवायं पुण्यदेश इत्युच्यते। ऐहिकपारत्रिकसुखसम्पादनार्थं मानवा धर्ममनुतिष्ठन्ति। कृतादियुगेषु शरीरदार्ढ्यधनसम्पत्तिपरमास्तिक्यविद्वत्तासद्भावाद्यागादिकर्मनिरता आसन्। गच्छता कालेन दौर्बल्यान्मानवाः सुखकरमार्गान्वेषणे प्रवृत्ता उपासनामङ्गीचक्रुः। उपासने च मन्त्रा आवश्यकाः ते च उपास्यभेदेन विभिन्ना भवन्ति। एवं च जनाः कमुपासीरन् कान् वा मन्त्रानाश्रयेरन्निति जिज्ञासायामुक्तं वासिष्ठसंहितायां– शैवमन्त्रः कृतेऽन्यस्मिन् शाक्तेयो वैष्णवः परे। कलौ वैघ्नेश्वरो मन्त्रः विशेषेणेष्टसिद्धिदः॥ इति कृते शैवमन्त्रः, त्रेतायां शक्तिमन्त्रः, द्वापरे वैष्णवमन्त्रः विशेषेण सिद्धिदः कलौ तु विघ्नेश्वरमन्त्रः विशेषेणेष्टसिद्धिदः शीघ्रफलप्रदत्वात्। अतः कलौ महागणपतिर्भक्तैरुपास्यः। तत्र महागणपतिपदनिर्वचनं वासिष्ठसंहितायामनेकधा वर्णितम्– महेति महदाद्यमित्यादिना। मन्त्रशास्त्रीयग्रन्थप्रकाशनकार्यक्रमो महागणपतिं, विशेषतो मत्कुलाराध्यं देवमनाराध्य तदुपासनाग्रन्थं चाप्रकाश्य परिपूर्णो न भवतीति परिश्रमस्तत्र प्रारब्धः।

यद्यपि गणपतिप्रार्थनं प्रथमतः कर्तव्यमासीत् तथाऽपि क्षयमासस्य सन्निहितत्वेन क्षयमासमीमांसारचनप्रकाशनं पूर्वमेव कृतम्। तदनन्तरमनेकान् तन्त्रग्रन्थान् प्रकाश्याधुना

अन्तिमपुष्पत्वेन गणपतितन्त्रप्रकाशनं कृत्वा समाप्यते तन्त्रप्रकाशनकार्यम् ।

कूटक्षेत्रस्थसालिग्रामनरसिंहसुप्रभातरचनासमये वासिष्ठसंहितोक्तं गणपतियागं कुरु इति देवाज्ञप्तिमवलोक्य तद्ग्रन्थगवेषणवेलायां मद्गृहे एव ताडपत्रेषु सुप्तां वासिष्ठसंहितामद्राक्षम् । परमत्र महालक्ष्मीविषयं उपासनाभागमदृष्ट्वा पुनर्गवेषणसमये विनायकोदये तमिमं विषयं दृष्ट्वा तद्ग्रन्थान्तभागे महाशैवतन्त्रोक्तमहालक्ष्मीविद्यापीठिकां च दृष्ट्वा सन्तोषतुन्दिलमानसः प्रकाशने बद्धपरिकरः वर्षत्रये ग्रन्थत्रयं प्रकाश्यान्ते प्रकाशितवान् । यद्यपि अन्वेषणवेलायां गणपतिसम्बन्धिविनायकसंहितागणककल्पौ चोपलब्धौ । परं तत्र वामाचारबाहुल्यं दृष्ट्वा तत् प्रकाशनं परित्यक्तम् । आभ्यामेव वासिष्ठसंहिताविनायकोदयाभ्यामास्तिकानां जिज्ञासूनामनुष्ठातॄणामपेक्षितविषयलाभो भवेदिति मन्ये । वासिष्ठसंहितासंशोधाने आदर्शपुस्तकं ताडपत्रस्थमेकं; हस्तलिखितमन्यत्; श्री शिरालि कृष्णभट्टैः अपरिपूर्णतया प्रकाशितः वासिष्ठसंहिताभागश्च ।

लक्षणसंहिताप्रकाशने संशोधाककार्यं प्रति यदुपवर्णितं तन्मयाऽनुभूतमिदानीमेतद्ग्रन्थद्वयप्रकाशनवेलायाम् ।

विनायकोदये परं आदर्शचतुष्टयलाभेऽपि लेखकप्रमादकृतदोषाः सर्वत्रैकरूपाः प्रायशः सर्वे ग्रन्था एकमूला अतोऽपि ग्रन्थद्वयप्रकाशनमतीव क्लेशकरं जातम् । तस्मात् मत्प्रतिभाबलात् दोषपरिहारे कृते इममेव पाठं समीचीनं मत्वा शुद्धपाठलाभे विमर्शकाः प्रयत्नमेव न कुर्युरित्युत्प्रेक्ष्य प्रायशस्ते दोषास्तथैव स्थापिताः; क्वचित् शुद्धपाठो मदीयः चतुरस्रकंसमध्ये निवेशितः; विमर्शकैर्यदा कदा वा यत्र कुत्र वा शुद्ध-

आदर्शग्रन्थ उपलभ्येत समीक्रियन्तां इत्याशयेन । आस्तां नाम प्रकृतमनुसरामः वासिष्ठसंहितायां मन्त्रोद्धारे "पदं गणाधिपतये" इति पाठः सन्दृष्टः तथास्वीकारे एकाक्षराधिक्यं भवति । यन्त्रलेखे अन्त्यमन्त्ये पलाशे इत्युक्त अन्त्यपत्रे एकाक्षरलेखश्च न सम्भवति अक्षरद्वयस्यावशिष्टत्वात् । अतः पदं गणादिपतये इति पाठः सम्पादितः । विनायकोदये लक्ष्म्यां षण्णां बीजानामुद्धारः कृतः अवशिष्टभागः अस्पष्टः । लक्ष्मीविद्यायां पञ्चानामेव बीजानामुद्धारः कृतः । अत्रोपदेश एव शरणं यतो हि मन्त्रशास्त्रे पुस्तकं मार्गदर्शकम् । पुस्तकमात्रात् विज्ञायानुष्ठाता फलं न लभते । अतः एतादृशसन्दिग्धविषये विद्वद्भिर्विमृश्यानुष्ठेयम् ।

द्विविधो हि यागः अन्तर्यागो बहिर्याग इति । न्यासादिभिर्देहे देवोपासनमन्तर्यागः अन्तर्यागेन शुद्धो हि साक्षाद्देवो भवति । तदुक्तं विनायकोदये— न्यासैरेतैरपि च सकलैर्न्यस्तगात्रोऽथ मन्त्री विघ्नेशोऽसौ भवति स महान् सर्वलोकप्रियश्च इति । एवं न्यासेन शुद्धो बहिर्यागं कुर्यात् ।

बहिर्यागे पूजाया एव प्राधान्यं न तु होमस्य अन्यस्य जपादेर्वा । तदुक्तं वासिष्ठसंहितायां— पूजास्थानं च तन्मध्ये पूर्वभागे जपस्थलम् । दक्षिणे स्तोत्रसंस्थानं पश्चिमे तर्पणस्थलम् । उत्तरे होमसंस्थानमीशान्ये कलशार्चनम् इति मध्ये पूजास्थानं च निर्दिश्य परितः अङ्गानां स्थानं निर्दिष्टम् । प्रयोगेऽपि प्रथमतः पूजां विधाय नैवेद्यान्ते कलशपूजाहोमतर्पणजपनमस्काराः कर्तव्यत्वेनोक्ताः ।

अतस्तर्पणादीनामिव होमस्याऽऽप्यङ्गत्वं सिद्ध्यति । मन्त्रसिद्धौ परं जपस्य प्राधान्यमित्यन्यदेतत् दशांशहोमतर्पणाद्युक्तेः । तत्रापि पूजायां यन्त्रपूजायाः प्राशस्त्यमवगम्यते अन्तर्यागं समा-

प्यैवं बहिर्यागं समारभेत् इत्युक्त्वा यन्त्रस्य विधानात् "महागणपयन्त्रस्य गुर्वादेशात् क्रियोच्यते इत्यादिना। कुम्भेऽपि यन्त्रभावना विहिता;" पूर्वोक्तवन्मध्यकुम्भे यन्त्रं सञ्चिन्त्य मन्त्रवित्" इति। तत्र यागयोग्यं यन्त्रमेकं प्रथमतो विहितं तदेव यन्त्रं विनायकोदयेऽपि विहितम्। रक्षायोग्यं द्वितीयं यन्त्रं तु केवलं वासिष्ठसंहितायां विहितम्। विनायकोदये इदं न दृश्यते परं शारदातिलके इदं यन्त्रं दृश्यते। बीजं षट्कोणमध्ये इति यन्त्रोद्धारश्लोकोऽपि वासिष्ठसंहिताशारदातिलकयोः समानः।

प्रसङ्गाद्यन्त्रविषये किञ्चिदुच्यते– त्रिकोणं षट्कोणं वृत्तं अष्टदलानि, वृत्तत्रयं गोपुरद्वयम् इति। तत्र त्रिकोणे प्रणवस्थं गमिति, दिक्षु त्रिकोणाद्बहिरग्रादारभ्य लक्ष्मीमायामन्मथभूबीजानि लिखेदित्यर्थः अनेन मिथुनपञ्चकं यन्त्रस्थं भवति। अत्र यन्त्रलेखने पूजायां च यंत्रपूजकयोर्मध्या प्राची ज्ञेया। न तु प्रसिद्धा ग्राह्या। तथाहि– शारदातिलकव्याख्यायां "देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता तु देशिकैः"। ....."देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत्" "तथाऽऽवरणपूजाऽस्य[यां] पुरः प्राचीं प्रकल्पयेत्" इत्याद्युक्त्वा अन्ते– "तेन यन्त्रादावपि दलेष्वक्षरलेखने अग्रादारभ्य लेखनीयमिति ज्ञेयं" इत्युक्तम्। अत्रापि वासिष्ठसंहितायाम्– "तस्याग्रदक्षपृष्ठेषु" "अग्रस्थबिल्ववृक्षाधः" इति, विनायकोदयेऽपि "रमारमेशावग्रस्थश्रीवृक्षोपान्तमाश्रितौ" इति चोक्तम्। तथा च यन्त्रस्य दक्षिणवामौ होतुर्वामदक्षिणौ भवतः। एवं सति श्रीकृष्णभट्टसङ्गृहीते महागणपतिहोमप्रयोगे यन्त्रलेखने प्रसिद्धपूर्वाग्रहणं विचारणीयम्। तथा स्वोद्धृतप्रमाणोक्तानि लक्ष्मीमायाकन्दर्पभूबीजानि च न लिखितानि आस्तां नाम।

षट्सु कोणेषु अग्रादारभ्य षड्बीजानि मन्त्राद्यानि विलिख्य अग्न्यादिषट्सन्धिषु षडङ्गमन्त्रान्विलिख्य अष्टसु पत्रेषु अग्रादेव मूलमन्त्रशिष्टगणप इत्याद्यक्षराणि त्रिशस्त्रिशो विलिख्याव-शिष्टमेकं वर्णमन्त्यपत्रे लिखेत् । ततः क्रमोत्क्रमलिपिभि-र्यन्त्रमावेष्टयेत् ततः पाशाङ्कुशाभ्यां वेष्टयेत् इति साम्प्रदा-यिकः प्रकारः । विनायकोदये वासिष्ठसंहितायां प्रथमतश्चोक्त यन्त्रालेखनप्रकारो न साम्प्रदायिक इति भाति ।

किञ्च वासिष्ठसंहितायां प्रथमप्रकारे ईशे वर्णैः क्रमाल्लिखे-दित्युक्तमपि विचारणीयम् । अत्र केचित्प्राणादिबीजादीनि लिखन्ति उदाहरन्ति च "प्राणं जीवं च शक्तिं च चक्षुःश्रोत्रा-दिकं तथा । प्राणप्रतिष्ठामन्त्रं च गायत्री यन्त्रमन्त्रयोः । भूतदिक्कालबीजानि यन्त्रस्याङ्गानि वै दश । इति । वासिष्ठ-संहितायां यागयन्त्रे कश्चन विशेष उक्तः "यन्त्रमालिख्य पूर्वोक्तं तन्मध्ये गाणपत्यकम् । त्रिकोणान्तर्दक्षिणान्तं तारो-मान्तर्हिते लिखेत् । विघ्नेशवह्निबीजे द्वे शक्तिपार्श्वे शिवा-क्षरम्" इति ।

बहिर्यागात् पूर्वमन्तर्यागस्यावश्यकत्वात् द्वाविंशतिन्यासा विहिताः तदङ्गतया त्रिविधानि षडङ्गानि निर्दिष्टानि "त्रिधा-भेदः समुद्दिष्टः षडङ्गस्य मनीषिभिः । इति । विग्रहपूजायां तुण्डन्यासं षडङ्गानां युगळं च प्रविन्यसेत् । इत्युक्तं, त्रिविधेषु न्यासेषु कस्य त्याग इति नोक्तम् । विनायकोदयेऽपि आरम्भे करन्यास उक्तः । अन्ते "बीजयुक्तैश्च षड्विघ्नैः षडङ्गानि क्रमात्पुनः ।" इति वासिष्ठसंहितायामनुक्तः पक्ष उट्टङ्कितः । किञ्च षड्विघ्नैः सकान्तैरित्यनुक्तत्वात् केवलं आमोदाय हृदयाय नमः इत्युक्तेऽप्यलमिति भाति किन्तु दीक्षितयज्ञनारायण-सोमयाजिभिर्दत्त॰तलिखितपुस्तकद्वयं, एकं अतिशिथिलं

वासिष्ठसंहितोक्तन्यासप्रतिपादनपरं विनायकोदयोक्तन्यास प्रतिपादकम् । महता परिश्रमेण मूलं विमृश्य लिखितम् । एतदेव सत्सम्प्रदायत्वेन स्वीकृतम् ।

तत्र सिद्ध्यामोदाभ्यामित्युक्तम् । यत्र परं अत्यन्त-मूलविरोधः प्रतिभासते तत्र तत्र व्यत्यासः मद्बुद्ध्या कृतः सति कुड्ये चित्रलेखनमिति न्यायेन । मट्टिप्पण्या निदानभूत-पुस्तकं रहस्यमित्यविगणय्य दत्तवतां श्री सोमयाजिनामौदार्यं श्लाघ्यमेव । अतः सम्प्रदायमनुसृत्य मया टिप्पण्यां न्यासाः प्रतिपादिताः आस्तां नाम ।

विनायकोदये मातृकान्यासे षड्बीजानां सम्पुटीकरणं विहितं न्यासस्थानं तु न प्रदर्शितम् । अत एवानुमीयते वासिष्ठसंहितां दृष्ट्वैव विनायकोदय आरचितः इति । अत एव यत्र वासिष्ठसंहितायामुक्तविषये नातीव परितोषस्तत्र तत्र विशेषं वक्ष्यति यथा लक्ष्मीविषये । अत एवानुक्तमन्यतो ग्राह्यमिति न्यायमवलम्ब्य वासिष्ठसंहितायां सूचितं विनायकोदये कण्ठरवेण चोक्तं लक्ष्मीयागादिकं साम्प्रदायिका अनुतिष्ठन्ति अत्र वक्तव्यमुत्तरत्र वक्ष्यते । तथा द्वाविंशति-न्यासासम्भवेऽनुकल्पो विहितः "अशक्तश्चेन्मातृकादि द्वादश-न्यासमाचरेत् । तदशक्तस्तदर्धं वा मातृवर्णपदद्वयम् ।" इति तथा प्रकारभेदेन द्वादशावरणानि उभाभ्यामप्युक्तानि वासिष्ठ-संहितायां तु पञ्चावरणानि चतुरावरणानि चानुकल्पत्वे-नोक्तानि । अनुकल्पे आयुधानां न पृथगावरणत्वम् । प्रायशः पञ्चावरणेषु नैर्भर्यं दृश्यते ग्रन्थकर्तुः । यतः वह्नौ "पञ्चा-वृत्त्याऽपि" इति पञ्चावरणमुक्तम् । प्रायशः कैश्चिन्निराकृतः अन्यत्रानुक्तः अष्टद्रव्यमेलनहोमः अत्र विहितः । शारदातिलक-व्याख्यायां मेलनहोमो निराकृतः कारणान्युक्तानि च आहुति-

प्रमाणसन्देहापातात् प्रत्येकं पृथक्क्रियात्वात् द्रव्यान्तरत्वापत्तेरिति; तानि– द्रव्यशेषं समस्तं च तस्मिन्नेव नियोजयेत् । इति समस्तद्रव्यस्य होमे, निवेदने वा विनियुक्तत्वात् पक्वाष्टद्रव्यसंयुतं, तद्द्रव्यं, एकीकृत्याथ तत्सर्वं इत्यादि प्रमाणसद्भावेन द्रव्यान्तरत्वापत्तेरिष्टत्वाच्च निराकृतम् । किञ्च पद्मादिद्रव्यान्तराणामप्युक्तत्वेनाष्टद्रव्याण्येवेति नियमोऽपि नास्ति । यथा अधिवासहोमे साम्प्रदायिकैः पक्वात् पूर्वं हविर्भागं निवेद्य तद्भागान्तरेण पक्वहोमः क्रियते यथा वा तन्त्रशास्त्रे पूजायां निवेदितहविर्भागान्तरेण पूजाङ्गहोमः क्रियते तथाऽत्रापि अष्टद्रव्यभागं निवेद्य भागान्तरेण होमः क्रियते । युक्तं चैतदिति भाति । गणयागः पूजाङ्गहोमः इति पूर्वमेव साधितम् । होमे तर्पणे वा विभिन्नफलाय द्रव्यान्तरविधानं तु अङ्गत्वं न वा यति गोदोहनादिवत् गुणफलविधितयाऽपि सम्भवात् । अस्तु वा होमादिष्वेकमात्रानुष्ठाने तस्य तस्य प्राधान्यं ; अत्र तु होमस्याङ्गत्वमेव । अत एव मूले नैवेद्यविसर्जनं कर्मान्ते विहितम्– "पूजानैवेद्यमुद्वास्य शेषं कुम्भोदराय च" इति । अत्र कश्चन विशेषोऽस्ति गणयागे । गणहोमे उपयुक्तं सर्वं सावशेषं गणेशायार्पयेत् । तत्र नारिकेळत्वचामर्पणं कथमित्यपेक्षायां– "चर्माणि नाळिकेराणामशेषाण्यनले क्षिपेत्" इत्युक्तम् । तथैव "सोदकं नाळिकेरं स्यात्" इत्युक्तम्, तज्जलस्य विनियोगो विशेषतो नोक्तः, न च विनियोगापेक्षाभावः द्रव्यशेषं समस्तं च इति सामान्यत विनियोग उक्तः । स च कीदृश इत्यपेक्षायां– "नाळिकेरजलैः शुभैः" इति तर्पणे जलस्य विनियोगः सम्पादितः प्रतिपत्तेरपेक्षितत्वात् । अतः सति तज्जले अन्यनाळिकेरजलेन तर्पणं न कार्यं तज्जलाभावे अन्यनाळिकेरजलेनापि तर्पणं भवति हविषः उत्तरार्धनाशे आज्येन स्विष्टकृदिव ।

मन्त्रसिद्धौ जपाङ्गतर्पणं तु जलेनैव। फलाकांक्षायां क्षीरादिनाऽपि। तथा- आहुतिविषये मुष्टिप्रपूरणं द्रव्यमेकैकाहुतिरुच्यते। तदर्धा मध्यमा प्रोक्ता त्वधमा तु तदर्धका इत्युक्तम्। होमानन्तरं द्रव्यं शिष्यते चेत् का प्रतिपत्तिरिति जिज्ञासायां ग्रन्थकृता उक्तं- द्रव्यशेषं समस्तं च तस्मिन्नेव नियोजयेदिति। किन्तु अमन्त्रकहोमस्यावैधत्वान्निवेदनमेव युक्तम्। अतस्तादृशसम्प्रदायोऽपि नाशास्त्रीयः। विभिन्नफलापेक्षायां व्यस्तैरष्टभिर्द्रव्यैर्द्रव्यान्तरेण च होमो भवति। होममन्त्रो न केवलं मूलं किन्तु बीजाक्षरमपि भवति। चतुरावृत्तितर्पणं; केवलं मूलेनापि तर्पणं च विहितम्।

महालक्ष्मीमन्त्रेण होमे परं विप्रतिपत्तिरस्ति। अन्यमन्त्रकहोमेऽन्यमन्त्रस्य का प्रसक्तिः? न च वचनमस्ति तस्मान्न कर्तव्य इति। अपरे तु सत्यं वासिष्ठसंहितायां स्पष्टवचनं न प्रतीयते। तथाऽपि महालक्ष्मीमन्त्रहोमोऽस्त्येवेति वदन्ति। तथाहि- वासिष्ठसंहितायां वचनाभावस्तु न प्रतिबन्धकः पीठावरणादीनामपि होमो न स्यात् केवलं प्रधानहोमस्योक्तत्वात्। परिवाराणां होमो मन्त्रशास्त्रसिद्ध इति चेन्नायं दण्डवारितो लक्ष्मीविषये "उपर्यब्जे समासीनां महालक्ष्मीं विचिन्तयेत्"। "त्रिस्त्रिवारं च मूलाभ्यां देवं देवीं च पूजयेत्" इत्यादिभिर्लक्ष्म्या अपि परिवारत्वमुक्तम्। परिवाराणां प्रधानहोमद्रव्येण होमो मन्त्रशास्त्रसिद्धः। एतद्रहस्यमाकलय्य विनायकोदये स्पष्टतया देव्या होम उक्तः। देवीमन्त्रेण तुर्यांशं जुहुयादनुसञ्जपेत् इत्यनेन देव्याः प्राधान्यमवगत्य होमानन्तरं जपोऽप्युक्तः न च पूजाहोमसादृश्ये परिवाराणामपि द्रव्यहोमः प्रसज्येतेति वाच्यम्। न्यायेन तथा प्राप्तावपि वचनेन निवारितत्वात् "आज्येन सकलैर्मन्त्रैर्हुत्वा चैव सकृत् सकृत्"।

"विघ्नत्रयादिकुसुमनिध्यन्तानां घृताहुतिः" इत्याद्यनेकवचनैः तथाऽवगमात् । अत्र पूजामन्त्रैः सकृत् सकृत् इति वचनं दृष्ट्वा केचन ध्यानादि नामभिर्जुह्वति ते भ्रान्ताः । तन्त्रशास्त्रे हि पूजायामुपयुक्ता आवरणादयः पूजामन्त्राः इति प्रसिद्धम् ।

अत्र किञ्चिद्विचारणीयमस्ति । विनायकोदये–

"देवीमन्त्रेण तुर्यांशं पूजामन्त्रैः सकृत्सकृत् ।

तत्रावृतीतां मन्त्रान्ते पूर्णाहुतिमखण्डधीः ॥" इति पूजामन्त्रा एवावृतय इति संसूच्य तेषामावृतिहोमान्ते पूर्णाहुतिं, मध्येऽष्टद्रव्याहुतिं चोक्त्वाऽन्तेऽपि "विघ्नत्रयादिकुसुमम्" इत्यादिनाऽऽवरणहोमो विहितः । अतः प्रधानात् पूर्वमनन्तरं चावरणैर्होतव्यमिति भाति । विनायकोदये कलशस्तोत्रनमस्कारौ नोक्तौ वासिष्ठसंहितायां तु पूजाध्वरजपस्तोत्रकुम्भतर्पणकर्माणि विहितानि । तदङ्गतयाऽऽचार्यादीनि षडृत्विजश्चोक्ताः । "धनाढ्ये द्रव्यबाहुल्ये होमबाहुल्यमिष्यते" इत्युक्तेः होमबाहुल्य एव षड्ऋत्विजः । अन्यथा एकेनैव क्रमात् पूजाकलशहोमजपस्तोत्रनमस्काराः कर्तव्याः इत्यवगम्यते प्रयोगदर्शनेन । तथा उक्तद्रव्यमानासम्भवे प्रमाणार्धं ग्राह्यमिति चोक्तम् । नाळिकेरसंख्याऽपि न नियता एकनाळिकेरादारभ्यासहस्रं ग्राह्या । तथाऽष्टद्रव्यासम्भवे चतुर्द्रव्येण तस्याप्यसम्भवे द्रव्यद्वयेन एकद्रव्येण वा होतुं शक्यते । याजुषाग्निमुखमिति नियमो नास्ति शैवागमोक्तविधिनाऽग्निजननं विहितम् । ब्रह्मणः अनुक्तत्वादापूर्विकतन्त्रेणानुतिष्ठन्ति शिष्टाः । एवं बहुवादग्रस्तांशा उत्थापिताः; विमर्शका विमृश्यानुतिष्ठन्तु नाम न क्वापि पक्षे मम नैर्भर्यम् ।

वासिष्ठसंहिता शारदातिलकमुपजीवति यतः तत्रोक्तयन्त्रलेखनप्रकारः, हस्तीन्द्राननमिति ध्यानं, पद्मनिधिः, तत्रत्य-

श्लोकाश्च केचनात्रापि दृश्यन्ते । न च संहितात्वादीशप्रोक्तेति शङ्कनीयम् । विप्रकल्पौघमालोच्य सारं सङ्गृह्य समासेन प्रवक्ष्यामीत्युक्तत्वेन पौरुषेयत्वावगमात् । विनायकोदयस्तु प्रपञ्चसारानुसारी इति मन्त्रार्णवोद्धृतः इति च तद्वाक्यादेवावगम्यते । "प्रपञ्चसारविधिना तानि कुर्यादतन्द्रितः ।" "महार्णवाख्यान्महृतः शिवागमात्" इति । तथा पद्मनिधिस्थाने पुष्पनिधिरिति चोक्तम् । वासिष्ठसंहिताकर्तृनामादिकं न किमपि ज्ञायते । विनायकोदयस्तु विश्वनाथप्रणीत इति तद्वाक्यादेव ज्ञायते । देशादिकं न ज्ञायते । परं परशुरामक्षेत्रे पश्चिमपर्वतप्रदेशे च गणपतियागानुष्ठानमेतद्ग्रन्थानुसारि इति निश्चितत्वादुभावपि ग्रन्थकर्तारौ परशुरामक्षेत्रीयावित्यत्र न मनागपि संशीतिः ।

वासिष्ठसंहितासंशोधने आदर्शग्रन्थाः–

१) मत्पितृपादनरसिंहसोमयाजिसम्बन्धी प्रथमः
२) मत्सम्पादितः कागजपत्रस्थः द्वितीयः
३) दीक्षितयज्ञनारायणसोमयाजिसम्बन्धी कागजपत्रस्थः हस्तलिखितन्यासबोधकः तृतीयः

विनायकोदयसंशोधने आदर्शग्रन्थाः–

१) दीक्षित ब्रह्मश्री यज्ञनारायणसोमयाजिसम्बन्धी प्रथमः
२) पुरोहित ब्रह्मश्री यु. कृष्णकारन्तसम्बन्धिनौ द्वितीयतृतीयौ
३) तत्सम्बन्ध्येव कागजपत्रस्थः हस्तलिखितः चतुर्थः

एतेषां पुस्तकदातृृणां दीक्षित यज्ञनारायणसोमयाजिनां ब्रह्मश्री कृष्णकारन्तानां चोपकृतिं न विस्मरामि । तथा अल्पेनैव कालेन मुद्रणकार्यं सम्पादयितृृणां साम्राज्यम् मुद्रणालयाधिकारिणां कार्तज्ञ्यं वहामि । एवमपि कार्यान्तरव्यापृतत्वात् मनुजसहजभ्रमप्रमादादिदोषान्मुद्रणदोषाद्वा समुत्पन्नं स्खालित्यं

क्षन्तव्यम् । यतो हि सम्यक् शोधने कृतेऽपि १८ तमे पुटे ४३ तमश्लोकानन्तरं विद्यमानः "विघ्नो विनायको" इत्यर्धश्लोकः १९ पुटे ५२ श्लोकमध्ये पतितः । ७ पृष्ठे ३० पङ्क्तौ फट् इत्यनन्तरं विद्यमानः "मातृकाभिः आपादाम्भोजं संव्याप्य" इति लुप्तम् । ६० पृष्ठे २५ पङ्क्तौ गं महागणपतये इति स्थाने ग्लौं गं ओं नमो महागणपतये इति च लुप्तम् । एतादृशं हि मुद्राराक्षसवैभवं यदूहितुमप्यशक्यम् । अतः एतत्सर्वं समीकृत्य शुद्धिपत्रिकां च दृष्ट्वा अनन्तरं पठने प्रयत्नो विधेयः । यद्यपीदं मन्त्रशास्त्रं ; पुस्तकदर्शनादनुष्ठानं दुःशकम्; तथाऽपि जिज्ञासूनां कृते उपहारीकृतोऽयं ग्रन्थः । अनेन मदीयपरिश्रमेणानुष्ठातॄणामीषदप्युपकारो भवेच्चेद्धन्यमात्मानं मन्ये । ओं तत्सत्

दुन्दुभि भाद्रपदशुक्ल विनायकचतुर्थी

विदुषामनुचरः
कोट वासुदेवसोमयाजी

---

शुद्धिपत्रिका : (प्रथमतः शुद्धिः निर्दिष्टा)

वासिष्ठसंहितान्तिमपत्रे काश्चन शुद्धयः प्रदर्शिताः अवशिष्टाः काश्चन शुद्धयः ।

10 १७ एकदन्त, एकदन्ति 16 २० द्वादश, द्व दश 17 ६ ध्रुवान्तै, ध्रुवातै 25 २२ प्राप्नोत्य, प्राप्ने त्य 30 ९ आमोदसि, आमोद[दं]सि 36 २० मध्वाज्ये, मध्याज्ये 39 १३ -र्भैवि-, भैवि 54 २१ रकारमू, रकामू- 59 १८ ८, ७ 61 २३ यन्त्रा, यन्त्र 65 २३ शान्तया, शान्या 66 ८ मूर्धाद्य-, मूर्ध्न्याद्य- १२ पदन्यास, पद यास 67 ४ [स्कन्धयो], [स्कन्धय] २१ णोत्तरे-, नोत्तरे- 68 २४ सक्थिषु, सन्धिषु 69 २७ ओं ग्लौं गं, ओं ह्रीं गं 70 ८ न्यस्य, यस्य 71 १६ [नेङ्गु], [नेङ्ग] 72 ५ [सौहृदैः], [सौहृदे] 74 ५ [कते], [कत] 81 ७ त्तीर्थ, त्त र्थ टि. नारां-, कारा- 83 ३ साध्याख्यां, साध्याध्यां पृ. सं. 92, 94 92 २ ब्राह्मणां, ब्राणां 93 १ [द्रस], द्रौ स 94 ८ [ढ्य], [ढ्य] 96 १५ [वितरत्], [वितरन्] 103 १६ णाम्, णान् 104 २४ शैवतन्त्रे, शैवमन्त्रे ।

# विषयसूची

श्री महागणपतये नमः





# वासिष्ठसंहिता

समासेन प्रवक्ष्यामि महाविघ्नेश्वराध्वरम् ।
सार्चनं जपसंयुक्तं स्तुतितर्पणसंयुतम् १
वेदपारायणोपेतं कलशार्चनसंयुतम् ।
विघ्नकल्पौघमालोच्य(ड्य) सारं सङ्गृह्य तत्वतः २
सर्वविघ्नप्रशमनं सर्वशत्रुविनाशनम् ।
सर्वपापहरं पुण्यं सर्वरोगविनाशनम् ३
सर्ववश्यकरं सर्वभूतप्रेतविनाशनम् ।
सर्वैश्वर्यकरं नृणां पुत्रपौत्रविवर्धनम् ४
सर्वोत्पातभयानां च नाशनं सौख्यवर्धनम् ।
महाभयौघहरणं धर्मकामार्थमोक्षदम् ५
आदिवर्णोद्भवाः प्रोक्ताः पञ्चाशद्विघ्नमूर्तयः ।
विघ्नेश्वराद्या द्वात्रिंशत्तासु मुख्याश्चतुर्दश ६
तासु मुख्यास्तथाऽष्टौ च चतस्रस्तासु मुख्यकाः ।
तासु विघ्नौ वरिष्ठौ द्वौ महाबीजगणाधिपौ ७
मन्त्रमुख्यो महाविघ्नो गणेशोऽखिलनायकः ।
महेति महदाद्यं तु तत्वजातमुदाहृतम् ८
तत्पत्नी प्रोच्यते तस्मान्महागणपसंज्ञकः ।
तत्वजातं महेत्युक्तं तत्वं वा महदादिकम् ९

ॐ श्रीं ह्रीं क्लीं ग्लौं गँ गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा ॥ =28 अक्षर



गणशब्दो जगत्सर्वं तस्माद्गणपतिः स्मृतः ।
तत्स्वरूपोदितो मन्त्रः सर्वमन्त्रगणाधिपः १०
भक्तानां हितकृत्प्रायः पुत्रस्येव यथा प्रसूः ।
शैवमन्त्रः कृतेऽन्यस्मिन् शाक्तेयो वैष्णवः परे[1] ११
कलौ वैघ्नेश्वरो मन्त्रो विशेषेणेष्टसिद्धिदः ।
वेदादिमोमामारोर्वीविघ्नबीजादि[2] [नि] चोद्धरेत् १२
पदं गणाधि [दि]पतये[3] वरेति वरदेति च ।
जनं सर्वादिकं मेऽन्तं स्वाहाऽऽदौ वशमानय १३
अष्टाविंशत्यक्षरोऽयं महावैघ्नेश्वरो मनुः ।
गणकोऽस्य ऋषिः प्रोक्तो गायत्रीनिचृदन्विता १४
महागणपतिः प्रोक्तो देवता च मनोः क्रमात् ।
क्लीवहीनेन मूलेन [लस्य] दीर्घभाजा[4] च षट् क्रमात् १५
अङ्गं तारादिबीजेन चैकैकेन[5] समन्वितम् ।
यद्वा तारादिसंयुक्तं पूर्वपूर्वसमन्वितम् १६
बीजं षड्दीर्घसंयुक्तं[6] योजयेद्धृदयादिषु ।
तारादिर्जपट्कान्तसंस्थितेन पृथक् पृथक् १७
मूलेन दीर्घभागेन[7] कुर्यादङ्गानि वा क्रमात् ।
त्रिधा भेदः समुद्दिष्टः षडङ्गस्य मनीषिभिः १८

---

1 परे–द्वापरे । 2 प्रणवलक्ष्मीशक्तिमन्मथपृथिवीविघ्नबीजानि– ओं श्रीं ह्रीं क्लीं ग्लौं गं इति सिद्धम् । 3 गणाधिपदं पतये इत्यन्तं तथा च गणपतये इति सिद्धयति । अन्यथा एकाक्षराधिक्यं भवति । 4 गां गीं इति नपुंसकरहितदीर्घाक्षरेण । 5 ओं, श्रीं इत्यादि एकैकयुतेन । तथा च ओं गां हृदयाय नमः श्रीं गीं शिरसे स्वाहा ह्रीं गूं शिखायै वषट् । क्लीं गैं कवचाय हुं । ग्लौं गौं नेत्रत्रयाय वौषट् । गं गः अस्त्राय फट् इति । 6 ओं गां, ओं श्रीं गीं, ओं श्रीं ह्रीं गूं, ओं श्रीं ह्रीं क्लीं गैं, ओं श्रीं ह्रीं क्लीं ग्लौं गौं, ओं श्रीं ह्रीं क्लीं ग्लौं गं, ओं श्रीं ह्रीं क्लीं ग्लौं गं गः इति । 7 ओं श्रीं ह्रीं क्लीं ग्लौं गं इति षड्बीजयुतेन गां गीं इत्यादिना अङ्गकल्पनं, तथा च त्रिधा भेदा भवन्ति ।

ध्यानम्

नवरत्नमयं पीठं स्मरेदिक्षुरसाम्बुधौ ।
तद्वीचिधौतपर्यन्तं मन्दमारुतवीजितम् १९
मन्दारपारिजातादिकल्पवृक्षैः समाकुलम् ।
तद्भूतरत्नछायाभिररुणीकृतभूतलम् २०
उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम् ।
तस्य मध्ये पारिजातनवरत्नमयं स्मरेत् २१
ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्धनैः ।
तस्याधस्तान्महापीठे रचिते मातृकाम्बुजे २२
षट्कोणान्तस्त्रिकोणस्थं महागणपतिं स्मरेत् २३
हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिणेत्रं रसा-
दाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् ।
बीजापूरगदेक्षुचाप[गदाधनुस्त्रि] शिखयुक्चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तं भजे २४
गण्डपालिगलद्दानपूरलालसमानसान् ।
द्विरेफान् कर्णताळाभ्यां वारयन्तं मुहुर्मुहुः २५
कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः ।
रत्नवर्षैः प्रीणयन्तं साधकान् मदविह्वलम् २६
माणिक्यमकुटोपेतं रत्नाभरणभूषितम् ।
ध्यायेन्मन्त्री जपे[प]न् मन्त्रं दीक्षितस्त्वाज्ञया गुरोः २७
दान्तः शान्तमनाः शिष्यः स्व? त्रयीशास्त्रकोविदः ।
स्वगुरोः सन्निधिं गत्वा दीक्षां कुर्याद्विधानतः २८
विधिवन्मण्डपं कृत्वा सवेदिं कुण्डसंयुतम् ।
तन्मध्ये मण्डलं कृत्वा गुरुः प्रोक्तविधानतः २९
विधिवत्तत्र विघ्नेशं पूजयेन्नियतात्मवान् ।
बहुभक्षादिसंयुक्तमन्नमस्मै निवेदयेत् ३०
पद्मं तत्पूर्वभागे तु चतुष्पत्रसमन्वितम् ।

मध्ये पूर्वादिपत्रेषु कलशान् पञ्च विन्यसेत् ३१
पञ्चवृक्षाकषायं वा पञ्चगव्यमथाऽपि वा ।
मध्यादिपूरयेत्कुम्भान् विधिवत्पूजयेदथ ३२
गणेशं मध्यमे कुम्भे पूर्वे विष्णुं रमान्वितम् ।
सशक्ति दक्षिणे शम्भुं सरतिं पश्चिमे स्मरम् ३३
सभूमिं चोत्तरे कोलं तत्तन्मन्त्रैः पृथक् पृथक् ।
भूतान्याकाशपूर्वाणि मध्यादिषु यथाक्रमम् ३४
आवाह्य पूजयेन्मन्त्री सुगन्धकुसुमादिभिः ।
प्रत्येकं वस्त्रयुग्मेन वेष्टयित्वाऽथ होमयेत् ३५
दीक्षाहोमोक्तमार्गेण कुण्डे सौम्यदिगाश्रये ।
तत्तत्कर्मसमाप्याथ शिष्यं संस्नापयेद्गुरुः ३६
पूर्वादिकुम्भमुद्धृत्य तत्तन्मन्त्रैर्विधानतः ।
ततो गुरुः स्वशिष्याय मन्त्रमिष्टं निवेदयेत् ३७
गुरवे दक्षिणां दत्वा मन्त्रमिष्टं जपेत्सुधीः ।
स्नानं च विधिवत्कृत्वा नित्यकर्म विधाय च ३८
नदीतीरे वने शुद्धे पर्वते विजने पदे ।
चत्वारिंशत्सहस्रं तु चतुःसहस्रसंयुतम् ३९
चतुर्लक्षं जपेन्मन्त्री विघ्नेशं नित्यमर्चयेत् ।
होमयेदष्टभिर्द्रव्यैर्जपान्ते तद्दशांशतः ४०
नित्यं प्रतर्पयेद्विघ्नं चतुरूर्ध्वं चतुःशतम् ।
चत्वारिंशद्युतं वाऽपि चत्वारिंशच्चतुःशतम् ४१
जपहोमार्चनाद्यैश्च सिद्धो मन्त्रेण मन्त्रवित् ।
तत्तत्प्रयोजनं कर्म कुर्यात्तद्देवतात्मकः ४२
नदीतीरे वने रम्ये पर्वते वा शिवालये ।
गणेशभवने वाऽपि शुद्धे वाऽपि गृहाङ्कणे ४३
तीरादित्रिपदे ? पक्षे यत्र तत्रावकाशके ।

शिवालयादित्रिपदे दक्षिणेऽप्यनले पुरः ४४
तिथिविश्वेश्वरब्रह्मसंख्यहस्तसमन्वितम् ।
रक्तवस्त्रवितानाढ्यं दर्भमालाप्रवेष्टितम् ४५
नानाफलविळ[चित्रा]ढ्यं रक्तवस्त्रैरलङ्कृतम् ।
नानालङ्कारसंयुक्तं मुक्तादामविराजितम् ४६
कृत्वैवं मण्डपं पूर्वं व्यहात् पञ्चाहतः सुधीः ।
पूजास्थानं च तन्मध्ये पूर्वभागे जपस्थलम् ४७
दक्षिणे स्तोत्रसंस्थानं पश्चिमे तर्पणस्थलम् ।
उत्तरे होमसंस्थानं ईशान्ये कलशार्चनम् ४८
एवं सङ्कल्प्य शुद्धयर्थं वास्तुराक्षोघ्नमाचरेत् ।
कुण्डं संयोज्य [ग्य]मुत्पाद्य चतुरस्रं सुनेमिकम् ४९
द्विहस्तमेकहस्तं वा रत्निमात्रमथाऽपि वा ।
मेखलागुणसंयुक्तं मध्ये नाभिसमन्वितम् ५०
मनोरम्यं यथाखण्डं सुस्थि[शोधि]तं कुट्टनादिभिः ।
अधिवास्याथ तत्कर्मदिने प्रातः समाहितः ५१
स्नानं कृत्वा यथान्यायं नित्यकर्म विधाय च ।
पुत्रमित्रकळत्राढ्य ऋत्विगाचार्यसंयुतः ५२
ब्राह्मणाशीस्समायुक्तो वाद्यमङ्गलसंयुतः ।
मण्डपद्वारमासाद्य कर्ताऽलङ्कारसंयुतः ५३
द्वारपालान् समभ्यर्च्य कुर्यादाचमनं तथा ।
वक्रतुण्डैकदंष्ट्रौ च पूर्वद्वारे प्रपूजयेत् ५४
द्वारे तु दक्षिणे पूज्यौ महोदरगजाननौ ।
लम्बोदराख्यविकटौ पूज्यौ द्वारे तु पश्चिमे ५५
विघ्नराट्शूर्पकर्णाख्यावुत्तरे द्वारि पूजयेत् ।
विमलं च सुबाहुं च द्वाव(द्वारा)धोपरि पूजयेत् ५६
उपर्यब्जे समासीनां महालक्ष्मीं प्रपूजयेत् ।

(देहल्यां तु महालक्ष्मीं पूजयेदिष्टदेवताम्) ५७
देहलीं पूजयित्वा तु पूजयेदस्त्रदेवताः ।
उच्चाटनं तु भूतानां कुर्यादस्त्राणुना ततः ५८
ततः किञ्चित्प्रविश्यान्तर्गणेशमपि पूजयेत् ।
प्रविशेदथ मेधावी दक्षिणाङ्घ्रिपुरःसरम् ५९
पुण्याहवाचनं कृत्वा पञ्चगव्यं प्रसादयेत् ।
पूजास्थानाद्दक्षिणांशे शैवोदितविधानतः ६०
पीत्वाऽथ पञ्चगव्यं च पूजयेत्स्वेष्टदेवताम् ।
पूजाध्वरजपस्तोत्रकुम्भतर्पणकर्मणाम् ६१
तत्तत्कर्मार्हकान् विप्रानाचार्यादीन् प्रकल्पयेत् ।
आमोदादींश्च षड्विघ्नान् तेष्वावाह्य प्रपूजयेत् ६२
रक्तवस्त्रैः सुगन्धाद्यैः कम्बलैरङ्गुलीयकैः ।
सौवर्णै राजतैर्वाऽपि यज्ञसूत्रैः सकञ्चुकैः ६३
क्षौमोष्णीषैर्यथा शक्त्या भक्त्याऽभ्यर्च्य प्रसादयेत् ।
पूजयेदथ वेदज्ञान् वस्त्राद्यैश्च स्वशक्तितः ६४
वेदपारायणं विप्रैस्त्रिभिस्तैरत्र कारयेत् ।
ततो मण्डपसंस्कारं कुर्याच्छैवागमोदितम् ६५
आसनं कल्पयित्वाऽद्भिः सम्प्रोक्ष्यास्त्राणुना सुधीः ।
(भूयोऽभ्यर्च्य गणेशानं गन्धाद्यैः सितमोदकैः) ६६
कौशं दारुमयं वाऽपि कार्ष्णं कृत्तिमथाम्बरम् ।
सुधीरुपविशेत्तत्र प्राङ्मुखोदङ्मुखोऽपि वा ६७
द्रव्याणि गन्धपूर्वाणि पूजार्हाणि प्रसाद्य च ।
प्राणानायम्य सङ्कल्प्य पुण्याहं वाचयेत्ततः ६८
ऋज्वायताकृतिर्भूत्वा कुर्याच्छोषादिकाः क्रियाः ।[1]

1 मन्त्री प्रातः स्नानादिकृतनित्यक्रियः उक्तासने उपविश्याचम्य ओं ह्रीं गं शिवादि श्री गुरुभ्यो नमः इति शिरसि गुरुं प्रणम्य गणपतिं च संवन्द्य

शुद्धादिमातृकान्यासं दशधा विन्यसेत्क्रमात् ६९
शुद्धबिन्दुविसर्गाख्यमातृकान्यासमेव वा ।[1]
साधारणविशेषाभ्यां न्यासो हि द्विविधो मतः ७०
शुद्धः साधारणः प्रोक्तो बिन्दुबीजयुतः परः ।

...........................................................................................

तदाज्ञा मम्यार्थ्य ओं श्रीं ह्रीं क्लीं ग्लौं गं गः अस्त्राय फट् इत्यस्त्रेण करशुद्धिं देहशुद्धिं, ताळत्रयं, दिग्बन्धमग्निप्राकारांश्च विधाय नाडीशोधनं कुर्यात् ।

नाडीशोधनम्– ओं ह्रीं गं अं अर्कमण्डलाय नमः इति दक्षिणनासापुटेन षोडशमातृकया बहिर्मारुतं रेचयित्वा ओं ह्रीं गं उं सोममण्डलाय नमः इति वामनासापुटेन द्वादशमातृकया पूरयित्वा ओं ह्रीं गं मं सूर्यमण्डलाय नमः इति सुषुम्नानाड्या द्वादशमातृकया परिकुम्भ्य क्षकाराद्यकारान्तमेकैकस्मिन् लीनमिति बुद्धया मनसोच्चार्य सर्ववर्णगर्भमकारं बिन्दुरूपं षोडशान्ते परशिवे नियोजयेत् ।

भूतसंहारः– ग्लौमिति पञ्चदशवारमुच्चार्य पृथिवीतत्त्वं तत्कार्यं च संहृतमिति सञ्चिन्त्य पुनः ग्लौं इति द्वादशवारमुक्त्वा अप्तत्वं तत्कार्यं च संहृतमिति सञ्चिन्त्य पुनः ग्लौमिति नववारमुक्त्वा तेजस्तत्वं तत्कार्यं च संहृतं विचिन्त्य पुनः ग्लौमिति षड्वारमुच्चार्य वायुतत्वं तत्कार्यं च संहृतं विचिन्त्य पुनः ग्लौमिति त्रिवारमुक्त्वा आकाशतत्वं तत्कार्यं च संहृतं विचिन्त्य पुनः ग्लौमिति त्रिवारमुक्त्वा अन्तःकरणानि तद्विकाराणि च संहृत्य तत्सर्वं परमात्मनि विलीनं विचिन्तयेत् । [विनायकोदयोक्तो भूतसंहारः, तत्र त्रिंशद्वारमुच्चारणमुक्तम् ।]

ततः यं रं वं इति परिजपन् क्रमेण शोषणदाहनप्लावनानि कृत्वा परमात्मनः सकाशात् ग्लौमिति तत्तदुक्तसंख्यं जपन् अन्तःकरणाकाशवायुतेजोजलपृथिवीः संसृजेत् । हं हं हं इति परिजपन् मूलाधारात् अमितप्रभां कुण्डलिनीं उत्थाप्य आधारादि षट्चक्रमतीत्य द्वादशान्तस्थचन्द्रमण्डलं प्रवेश्य अकारादिक्षकारान्तां वर्णमालां परिजपन् तस्माच्चन्द्रमण्डलात् स्रवन्त्या अमृतधारया स्वदेहमाप्लावयेत् ।

1 शब्दब्रह्मऋषिः लिपिगायत्रीछन्दः मातृकासरस्वती देवता ओं अं कं खं गं घं ङं आं हृदयाय नमः इं चं छं जं झं ञं ईं शिरसे स्वाहा । उं टं ठं डं ढं णं ऊं शिखायै वषट् । एं तं थं दं धं नं ऐं कवचाय हुं । ओं पं फं बं भं मं औं नेत्रत्रयाय औषट् । अं यं रं लं वं शं षं सं हं ळं क्षं अः अस्त्राय फट् ।
2 शुद्धादिभेदेन दशधा मातृकान्यासाः प्रदर्श्यन्ते यद्यपि अस्मत्पूर्विकैः शुद्ध-

तत्तृतीयं स्वबीजं स्याद्वैनायकमते स्थितः ७१
मूलेन षट् करन्यासमङ्गुलिन्यास[1]माचरेत् ।
अङ्गुष्ठादिकनिष्ठान्तं करयोरुभयोरपि ७२
तळयोर्मूलमन्त्रेण षडङ्गान्येषु विन्यसेत् ।
महागणेशमन्त्रस्य[2] दशाङ्गन्यासमुत्तमम् ७३
वक्ष्येऽहं सम्प्रदायोक्तं पञ्चबीजैर्ध्रुवादिभिः ।
नेत्रयोः श्रोत्रयोर्युग्मे न्यसेद्बीजानि चोष्ठयोः[3] ७४

---

बिन्दुविसर्गभेदेन चतुर्धा भेदाः प्रदर्शिताः तथाऽपि मूले शुद्धः बिन्दुविसर्गयुतः इति द्वैविध्यं प्रदर्श्य तत्तृतीयं स्वबीजं स्यादित्युक्तेर्बीजमायोज्य दशधा भेदाः प्रदर्श्यन्ते । युक्तायुक्तत्वे पण्डिताः प्रमाणम् । अ नमः शिरसि, आ नमः मुखे, इ ई दक्षिणवामनेत्रयोः, उ ऊ दक्षिणवामश्रोत्रयोः, ऋ ॠ दक्षिणवामनासिकयोः, ऌ ॡ दक्षिणवामगण्डयोः, ए ऐ ओष्ठयोः, ओ औ दन्तपङ्क्त्योः, अं मूर्ध्नि, अः मुखे च न्यसेत् । (सर्वत्र मातृकान्ते नमः शब्दो योजनीयः) क नमः ख नमः ग, घ, ङ इति दक्षिणकरसन्ध्यग्रेषु । च, छ, ज, झ, ञ इति वामकरसन्ध्यग्रेषु । ट, ठ, ड, ढ, ण इति दक्षिणपादसन्ध्यग्रेषु । त, थ, द, ध, न इति वामपादसन्ध्यग्रेषु । प, फ इति पार्श्वयोः, ब इति पृष्ठे, भ इति नाभौ, म इति जठरे, य इति हृदये, र इति दक्षिणकक्षे, ल इति पश्चाद्गले, व इति वामकक्षे, श इति हृदादिदक्षिणकरे, ष इति हृदादिवामकरे, स इति हृदादिदक्षिणपादे, ह इति हृदादिवामपादे, ळ इति गुह्ये, क्ष इति मुखे च न्यसेदिति प्रथमः । अं नमः आं नमः इति पूर्वोक्तशिरःप्रभृति न्यासे द्वितीयः । अः आः इति पूर्वोक्तस्थानेषु न्यासे तृतीयः । अं अः नमः इं इः नमः इति बिन्दुविसर्गयुक्तन्यासे चतुर्थः । [तथा अः नमः अं नमः इति विसर्गबिन्दुयुक्तन्यासे पञ्चमः । तथा अ गं नमः आ गं नमः, तथा अं गं नमः तथा अः गं नमः, तथा अं अः गं, तथा अः अं गं नमः इति बीजयुक्तन्यासे दशविधमातृकान्यासो भवति ।] इति मातृकान्यासः प्रथमः ।

1 मूलेन षड्वारं करन्यासं कृत्वाऽङ्गुलिन्यासं कुर्यात् । ओं श्रीं ह्रीं क्लीं ग्लौं गं गां अङ्गुष्ठिकाभ्यां नमः । ओं श्रीं.... गीं तर्जनीभ्यां.... । ओं .... गूं मध्यमाभ्यां.... । ओं .... गैं अनामिकाभ्यां.... । ओं .... गौं कनिष्ठिकाभ्यां.... । ओं ... गं करतलाभ्यां.... इत्यङ्गुलिषु तलयोश्च न्यसेत् । 2 दशाङ्गन्यासमाह । 3 ओं अं नमः दक्षिणनेत्रे, श्रीं आं वामनेत्रे, ह्रीं इं दक्षिणश्रोत्रे, क्लीं ईं

दक्षदोष्पादसन्ध्यग्रे[1]ष्वन्यदोष्पादयोस्तथा[2] ।
स्थापयेद्दक्षदोष्पादवामदोष्पादगलेषु[3] च ७५
दक्षांसपृष्ठस्फिग्वामभागांसस्फिक्षु[4] च क्रमात् ।
शिरोवदनहृद्गुह्यपादेषु[5] च यथाक्रमम् ७६
पूर्वदक्षिणपाश्चात्यसोदीच्योर्ध्वाननेषु[6] च ।
विन्यसेत्पञ्चभिर्बीजैर्मातृकाक्षरसंयुतैः ७७
शेषं शेषं तु मनुना व्यापयेत्तात्र तत्र तु ।
दशाङ्गन्यास इत्युक्तः सर्वसिद्धिप्रदायकः ७८
विघ्नेश्वरो विघ्नराजो विनायकशिवोत्तमौ ।
विघ्नकर्ता विघ्नहर्ता विघ्नराड्गणनायकौ ७९
एकदन्तो द्विदन्तश्च गजवक्त्रो निरञ्जनः ।
कपर्दी दीर्घवक्त्रश्च शङ्कुकर्णो वृषध्वजः ८०
गणेश्वरो गजेन्द्रश्च शूर्पकर्णस्त्रिणेत्रकः ।

---

वामश्रोत्रे ग्लौं उं ओष्ठयोः इति न्यस्य गं गणपतये ...स्वाहा इति शेषेण उक्तेषु स्थानेषु व्यापयेत् । इति प्रथम अङ्गन्यासः ।

1 ओं ऊ, श्रीं ऋं, ह्रीं ॠं, क्लीं लृं, ग्लौं लॄं इति दक्षिणभुजसन्धिचतुष्के अग्रे च न्यसेदिति द्वितीय अङ्गन्यासः । ओं एं, श्रीं ऐं, ह्रीं ओं, क्लीं औं, ग्लौं अं इति क्रमेण दक्षिणपादसन्ध्यग्रेषु न्यसेदिति तृतीय अङ्गन्यासः । 2 ओं अः, श्रीं कं, ह्रीं खं, क्लीं गं, ग्लौं घं इति क्रमेण वामभुजसन्ध्यग्रेषु न्यसेदिति चतुर्थं अङ्गन्यासः । ओं ङं, श्रीं चं, ह्रीं छं क्लीं जं, ग्लौं झं इति वामपाद-सन्ध्यग्रेषु न्यसेदिति पञ्चम अङ्गन्यासः । 3 ओं ञं, श्रीं टं, ह्रीं ठं, क्लीं डं, ग्लौं ढं इति दक्षभुजे दक्षपादे वामभुजे वामपादे गले च न्यसेदिति षष्ठ अङ्गन्यसः । 4 ओं णं श्रीं तं, ह्रीं थं, क्लीं दं, ग्लौं धं इति दक्षांसे पृष्ठे दक्षिणस्फिचि वामांसे वामस्फिचि च न्यसेदिति सप्तम अङ्गन्यासः । मूलेऽष्टमो लुप्तः । ओं नं, श्रीं पं, ह्रीं फं, क्लीं बं, ग्लौं भं इति दक्षवामबाह्वोः दक्षवामभागयोः बाहु-पाद्गलेषु हृदि च न्यसेदिति अष्टमः । 5 ओं मं, श्रीं यं, ह्रीं रं, क्लीं लं, ग्लौं वं इति शिरसि, मुखे, हृदि, गुह्ये, पादयोः न्यसेदिति नवमः । 6 ओं शं, श्रीं षं, ह्रीं सं क्लीं हं, ग्लौं ळं इति पूर्वदक्षिणपश्चिमोत्तरोर्ध्वमुखेसु न्यसेत् इति दशमः । इति दशाङ्गन्यासो द्वितीयः ।

लम्बोदरो महानादो मदनश्च सदाशिवः ८१
आमोदो दुर्मुखश्चैव सुमुखश्च प्रमोदकः ।
एकपादो द्विजिह्वश्च शूरो वीरश्च षण्मुखः ८२
वरदो वामदेवश्च वक्रतुण्डः पिचिण्डकः ।
अग्रणी (सेनानी) ग्रामणीश्चैव विहगोत्तमसंज्ञकौ ८३
मत्तावाहश्च (उन्मत्तावाहो) जटिलो मुण्डः खड्गी च एव च ।
वरेण्यो वृषकेतुश्च भक्षप्रियगणेश्वरौ ८४
मेघनादो गणेशश्चेत्यादि विघ्नेशमूर्तयः[1] ।
श्रीं ह्रीं पुष्टिश्च शान्तिश्च द्राविणी च सरस्वती ८५

---

1 अथैकपञ्चाशन्मूर्त्यात्मकः गणेशमातृकान्यासस्तृतीयो यथा– ओं श्रीं ह्रीं क्लीं ग्लौं गं अं विघ्नेश्वरश्रीभ्यां नमः शिरसि । (यद्यपि श्रीविघ्नेश्वराभ्यां नमः इति साधु प्रयोगः तथापि मूल एव विघ्नेश्वरश्रीभ्यामित्युक्तेस्तथैवोच्यते । एवमुत्तरनामसु आदौ प्रणवादिषड्बीजयोजनमन्ते नमः पदयोजनं कार्यम्) आं विघ्नराजह्रीभ्यां मुखे । इं विनायकपुष्टिभ्यां दक्षिणनेत्रे । ईं शिवोत्तमशान्ति (कान्ति) भ्यां वामनेत्रे । उं विघ्नकृत्द्राविणीभ्यां दक्षिणश्रोत्रे । ऊं विघ्नहर्तृसरस्वतीभ्यां वामश्रोत्रे । ऋं विघ्नराड्रतिभ्यां दक्षिणनासिकाभ्यां । ॠं गणनायकमेधाभ्यां वामनासिकायां । ऌं एकदन्तिविभूतिभ्यां दक्षिणगण्डे । ॡं द्विदन्तकामिनीभ्यां वामगण्डे । एं गजवक्त्रमोहिनीभ्यां उत्तरोष्ठे । ऐं निरञ्जनभोगाभ्यां अधरोष्ठे । ओं कपर्दिज्वालिनीभ्यां उत्तरदन्तपङ्क्त्यां । औं दीर्घवक्त्रनन्दाभ्यां अधरदन्तपङ्क्त्यां । अं शङ्कुकर्णभोगदाभ्यां मूर्ध्नि । अः वृषध्वजकामरूपिणीभ्यां मुखे । कं गणेश्वरदुर्गाभ्यां खं गजेन्द्रतेजोवतीभ्यां गं शूर्पकर्णसत्याभ्यां घं त्रिणेत्रविघ्ननाशिनीभ्यां ङं लम्बोदरस्वरूपिणीभ्यां इति दक्षिणकरसन्ध्यग्रेषु । चं महानादमूर्तिभ्यां । छं मदनविह्वलाभ्यां । जं सदाशिवविरजाभ्यां । झं आमोदसुसिद्धिभ्यां । ञं दुर्मुखमदनावतीभ्यां इति वामकरसन्ध्यग्रेषु । टं सुमुखकान्तिभ्यां ठं प्रमोदवृद्धिभ्यां डं एकपादविरम्याभ्यां ढं द्विजिह्वमानुषीभ्यां । णं शूरमकरध्वजाभ्यां इति दक्षिणपादसन्ध्यग्रेषु । तं वीरद्राविणीभ्यां थं षण्मुखविकटाभ्यां दं वरदलज्जाभ्यां धं वामदेवदीर्घघोणाभ्यां नं वक्रतुण्डधनुर्धरीभ्यां इति वामपादसन्ध्यग्रेषु । पं पिचण्डकयामिनीभ्यां दक्षिणपार्श्वे । फं अग्रणीरात्रिभ्यां वामपार्श्वे । बं ग्रामणीयक्षाभ्यां पृष्ठे । भं विहगचन्द्रिकाभ्यां नाभौ । मं उत्तमशशिगर्भाभ्यां जठरे । यं मत्तवाहलोलाक्षि (लोमाक्षि) भ्यां हृदये । रं जटिलचपलाभ्यां दक्षिणकक्षे । लं मुण्ड-

रतिर्मेधा विभूतिश्च कामिनी मोहिनी तथा ।
भोगा च ज्वालिनी नन्दा भोगदा कामरूपिणी ८६
दुर्गा तेजोवती सत्या विघ्ननाशी स्वरूपिणी ।
मूर्तिर्विह्वला विरजा सुसिद्धिर्मदनावनी ८७
कान्तिवृ(र्ऋ)द्धिर्विरम्याख्या मानुषी मकरध्वजा ।
विद्रावी(द्राविर्णा) विकटा लज्जा दीर्घघोणा धानुर्धरी ८८
यामिनी च तथा रात्रिर्यक्षाख्या चन्द्रिका तथा ।
शशिगर्भा च लोलाक्षी(लोमाक्षी) चपलारुचिशार्ङिगका:
सुभगा च शिवा दुर्गा ? गुहप्रिया विशालिनी । [(दुर्गिका:) ॥
काळजिह्वेति विख्याता वर्णानां विघ्नशक्तय: ९०
वरदाभयहस्तास्ता रक्ता विघ्नाङ्कसंस्थिता: ।
सर्वाभरणदीप्ताङ्गच: प्रोक्ता या: समुदीरिता:[1] ९१
पाशाङ्कुशव[धा]रा: सर्वा रक्तवर्णा: स्वलङ्कृता: ।
पद्मासनगता विघ्नमूर्तय: समुदीरिता:[2] ९२
तारादिबीजषट्कं तु पूर्वमुक्त्वाऽऽदिवर्णकान् ।
सबिन्दूनथ विघ्नेशश्रीभ्यां नत्यन्तिकान् क्रमात् ९३
शृणु सौम्य कलान्या[3] यत्तत्वं प्रतिपादितम् ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च शाश्वती ९४
शान्त्यतीतेति विज्ञेया: कला: कल्पविदां वरै: ।
अयं मार्ग: स्वयं ज्ञेयो भोगमार्गस्तथाऽपर:[4] ९५
शान्त्यतीतादिक: सोऽय[5] संहृतिश्चैव कथ्यते ।

---

रुचिराभयां पश्चाद्गले । व खड्गिशार्ङ्गिका (दुर्गिका)भयां वामकक्षे । शं वरेण्यसुभगाभयां हृदादिदक्षिणकरे । षं वृषकेतुशिवाभयां हृदादिवामकरे । सं भक्षप्रियदुर्गाभयां हृदादिदक्षिणपादे । हं गणेश्वरगुहप्रियाभयां हृदादिवामपादे । ळं मेघनादविशालिनीभयां गुह्ये । ओं श्रीं .... क्षं गणेशकाळजिह्वाभयां नम: मुखे च न्यसेदिति । 1 शक्तिस्वरूपमुक्तम् । 2 मूर्तिस्वरूपमुक्तम् ।
3 कलान्यासमाह । 4 अपर: शान्त्यतीतादिक: भोगमार्ग: नाम सृष्टिमार्ग: । 5 सोऽयं पूर्वोक्त: निवृत्त्यादि: संहारमार्ग: ।

विन्यसेन्मूर्ध्नि हृदये कटयामूर्वोश्च जङ्घयोः ९६
भोगमार्गेण तेष्वेव स्थानेषु प्रळयाध्वना ।
तारं वैघ्नेश्वरं बीजं नमःशब्दं पराय च ९७
कलात्मने निवृत्यादिपदं हृद्रं [हार्दं] वदेत् क्रमात्[1] ।
तत्वन्यासं[2] ततो वक्ष्ये विघ्नसान्निध्यदायकम् ९८
जीवतत्वं प्राणतत्वमन्तःकरणमेव च ।
श्रोत्रादिपञ्चकं तद्वद्वागाद्यं शब्दपूर्वकम् ९९
आकाशाद्यं पञ्चभूतं स्वस्वस्थानेषु विन्यसेत् ।
सकारश्च हकारश्च हा[मा]दिकान्तं यथाक्रमम् १००
जीवादितत्वजातीनां तत्तद्बीजमुदाहृतम् ।
व्यापकं जीवतत्वेन प्राणतत्वं हृदि न्यसेत् १
मनःपूर्वं तु हृदये शब्दाद्यं श्रोत्रपूर्वकं ।

---

1 ओं गं नमः पराय शान्त्यतीतकलात्मने नमः मूर्ध्नि । ओं गं .... शान्तिकलात्मने ... हृदये । ओं गं .... विद्याकलात्मने .... कटचाम् । ओं गं ... प्रतिष्ठाकलात्मने .... ऊर्वोः । ओं गं .... निवृत्तिकलात्मने .... जङ्घयोः न्यसेत् । अत्र भोगमार्गः । प्रळयमार्गे निवृत्यादीन् पूर्वोक्तस्थानेषु न्यसेत् इति कलान्यासश्चतुर्थः । 2 तत्वन्यासमाह । यथा– ओं गं सं हं मं नमः पराय जीवतत्वात्मने नमः इति व्यापकं कुर्यात् । इतः परं प्रतितत्वमादौ ओं गं सं हं इत्युक्त्वा तत्तत्तत्वबीजं वदेत्, यथा ओं गं .... भं नमः पराय प्राणतत्वात्मने हृदये । ....बं... मनस्तत्वात्मने हृदये । .... फं ... बुद्धितत्वात्मने हृदये । .... पं .... अहङ्कारतत्वात्मने हृदये । [बुद्धिः अहङ्कारः मनः इति क्रमो मन्त्रशास्त्रे ] .... नं .... शब्दतन्मात्रात्मने श्रोत्रयोः । .... धं .... स्पर्शतन्मात्रात्मने त्वचि । .... दं ... रूपतन्मात्रात्मने चक्षुषोः । .... थं ... रसतन्मात्रात्मने जिह्वायां । .... तं .... गन्धतन्मात्रात्मने नासिकयोः । ....णं ...श्रोत्रात्मने श्रोत्रयोः । ....ढं... त्वगात्मने त्वचि । ....डं.... चक्षुरात्मने चक्षुषोः । ....ठं.. जिह्वात्मने जिह्वायां । ....टं... घ्राणात्मने नासिकयोः । ....ञं... वागात्मने वाचि । ..झं .. पाण्यात्मने हस्तयोः । ..जं.. पादात्मने पादयोः । ....छं... पाय्वात्मने पायौ । .... चं .... उपस्थात्मने उपस्थे । ....ङं.... आकाशतत्वात्मने मूर्ध्नि । ....घं....वायुतत्वात्मने नाभौ । ....गं....तेजस्तत्वात्मने जठरे । .... खं .... अप्तत्वात्मने ऊर्वोः । .... कं .... पृथिवीतत्वात्मने जङ्घयोः । इति तत्वन्यासः पञ्चमः ।

श्रोत्राद्यं श्रोत्रदेशादौ वागाद्यं वाक्पदादिषु १०२

मूर्ध्नि नाभौ च जठरे ऊर्वोर्जङ्घायुगे न्यसेत् ।

आकाशादीनि भूतानि तत्वन्यासमुदाहृतम् ३

विघ्नबीजं तु ताराद्यं तद्वर्णं बिन्दुसंयुतम् ।

नमः पराय चेत्युक्त्वा पश्चात्तत्वात्मने नमः ४

मूर्तिन्यासं ततः कृत्वा वक्त्रन्यासं समाचरेत् ।

मूर्ध्नि वक्त्रे[1] च हृदये गुह्ये पादतळद्वये ५

गणञ्जयादिमूर्तीश्च विन्यसेत्सुसमाहितः ।

गणञ्जयश्च विघ्नेशः एकदंष्ट्रोऽथ वीरकः ६

गजवक्त्रश्च पञ्चैव मूर्तयः समुदीरिताः ।

ताराद्येकैकबीजं तु प्रोक्त्वा बीजं गणेशितुः ७

ह्रस्वपञ्चसमायोगं ङेन्तं मूर्तिसमाह्वयम् ।

नमःपदं ततो ब्रूयान्मूर्तिन्यासमिति स्मृतम् ८

वक्त्रन्यासं[2] ततः कुर्यादुक्तमार्गेण मन्त्रवित् ।

ऊर्ध्वप्राग्दक्षिणप्रत्यगुत्तरेषु मुखेषु च ९

सम्पुटीकृत्य विघ्नेशं बीजं तारादिकैः [केन च] क्रमात् ।

एकैकेन तदूर्ध्वादिवक्त्राय च नमः क्रमात् १०

मूलमन्त्राक्षरन्यासं[3] कुर्यात्सान्निध्यसिद्धये । ११

मूर्ध्नि[4] फालाक्षिकर्णेषु नासिकास्येषु विन्यसेत्[5] १२

---

1 मूर्तिन्यासस्थानं मूर्तीश्चाह— ओं गं गणञ्जयाय नमः मूर्ध्नि । श्रीं गिं विघ्नेशाय नमः वक्त्रे । ह्रीं गुं एकदंष्ट्राय–हृदये । क्लीं गृं वीराय–गुह्ये । ग्लौं ग्लृं गजवक्त्राय–पादतळयोश्च न्यसेदिति मूर्तिन्यासः षष्ठः । 2 वक्त्रन्यासमाह यथा— ओं गं ओं ऊर्ध्ववक्त्राय नमः ऊर्ध्वमुखे । श्रीं गं श्रीं पूर्ववक्त्राय–पूर्वमुखे । ह्रीं गं ह्रीं दक्षिणवक्त्राय –दक्षिणमुखे । क्लीं गं क्लीं पश्चिमवक्त्राय – पश्चिममुखे । ग्लौं गं ग्लौं उत्तरवक्त्राय – उत्तरमुखे च न्यसेदिति सप्तमो वक्त्रन्यासः । 3 मूलाक्षरन्यासमाह । 4 ओं ओं नमः मूर्ध्नि । ओं श्रीं नमः फाले । ओं ह्रीं नमः नेत्रयोः । ओं क्लीं नम कर्णयोः । ओं ग्लौं नमः नासिकयोः । ओं गं नमः मुखे । ओं गं पं पं तं यें नमः इति

करपादचतुःसन्ध्यग्रे(षु) नाभौ हृदि विन्यसेत् ।
एषु स्थानेषु मन्त्राणान् मन्त्री स्वात्मविशुद्धये ११३
वर्णान् बिन्दुसमायुक्तान् तारादींश्च नमोन्तिकान् ।
पदन्यासं[1] ततः कुर्याच्चतुर्दशविभागतः १४
ताराद्यैकैव बजस्य पदमेकैकमीरितम् ।
पदं गणपतिं ह्यन्तं वरेति वरदेति च १५
पदं सर्वजनं चैव मेपदं च वशं तथा ।
वदेत्तथाऽऽनयपदं स्वाहेति च चतुर्दश १६
मूलाधारादिषट्चक्रे मुखाक्षिश्रुतिषु न्यसेत् ।
भ्रूमध्ये च ललाटे च ब्रह्मरन्ध्रे च मस्तके १७
द्वादशान्ते पदन्यासं तत्वशुद्धिकरं परम् ।
ताराद्यानि पदानि स्युर्नमोन्तानि चतुर्दश १८
ततश्चाष्टावृतिन्यासो[2] वक्ष्यते सर्वसिद्धये ।

---

दक्षिणकरचतुःसन्ध्यग्रेषु, वं रं वं रं दं इति वामकरसन्ध्यग्रेषु सं वं जं नं मं दक्षिणपादसन्ध्यग्रेषु, वं शं मां नं यं वामपादसन्ध्यग्रेषु, स्वां नाभौ हां नम इति हृदये च न्यसेदिति अष्टमो मूलाक्षरन्यासः ।

1 पदन्यासमाह । तद्यथा– ओं ओं नमः मूलाधारे । ओं श्रीं नमः लिङ्गमूले । ओं ह्रीं नमः नाभौ । ओं क्लीं नमः हृदये । ओं ग्लौं नमः तालुमूले । ओं गं नमः ललाटे । ओं गणपतये नमः मुखे । ओं वर नमः नेत्रयोः । ओं वरद नमः कर्णयोः । ओं सर्वजनं नमः भ्रूमध्ये । ओं मे नमः ललाटे । ओं वशं नमः ब्रह्मरन्ध्रे । ओं आनय नमः मस्तके । ओं स्वाहा नमः द्वादशान्तपदे च न्यसेदिति नवमः पदन्यासः ।

2 अष्टावृतिन्यासमाह तद्यथा– ओं गं गणपतये – स्वाहा नमः शिरसि । श्रीं गणपतये .... स्वाहा नमः ललाटे । ह्रीं गण .... .... दक्षिणनेत्रे । क्लीं गण- .... .... वामनेत्रे । ग्लौं गण .... .... मुखे । गं गण .... .... इत्यनेन व्यापयेत । इति प्रथमावृतिः । एभिरेव मन्त्रैः दक्षिणकरसन्ध्यग्रेषु द्वितीयावृतिः । एभिरेव मन्त्रैः वामकरसन्ध्यग्रेषु तृतीयावृतिः । .... .... दक्षिणपादसन्ध्यग्रेषु चतुरावृतिः । .... .... वामपादसन्ध्यग्रेषु पञ्चमावृतिः । ........ जङ्घयोः पार्श्वयोः कण्ठे च षष्ठावृतिः । ........ जानुद्वये अंसद्वये हृदये च सप्तमा-

कालिका [कङ्काल]क्षिद्वयास्येषु करपत्सन्धिपञ्चसु ११९
जत्रौ द्विपार्श्वयोः कण्ठे जानुद्वयांसद्वये हृदि ।
पदद्वन्द्वे कटिद्वन्द्वे नाभावष्टावृति क्रमात् २०
प्रत्येकं च जपेदेकं ताराद्यं प्रवदेत् क्रमात् ।
द्वात्रिंशल्ल[द्वात्रिंशद्व]र्णमुच्चार्य भूयो भूयो यथा क्रमात् २१
वज्रपञ्जरविन्यासं विन्यसेन्मन्त्रवित्तमः ।
बीजैस्ताराद्विभिः षड्भिर्विघ्नान्तैर्वज्रपञ्जरम् २२
हृन्मुखांसोरुयुग्मेषु कण्ठे नाभौ च पार्श्वयोः ।
पृष्ठे हृदि शिरोवक्त्रनेत्रनासापुटेष्वपि २३
पाण्योः सन्धिषु चाग्रेषु तथैव पादयोः पुनः ।
मूर्ध्नि वक्त्रे च हृदये उदरे पार्श्वयोः क्रमात् २४
मूर्ध्नि वक्त्रे च हृदयोदरकट्यूरुपाद[र्श्व]योः ।
हृद्वक्त्रचक्षुर्नाभीत्यर्भोष्टेषु मुखांसयोः ।
हृदयाङ्घ्र्यूरूदरेषु न्यासोऽयं वज्रपञ्जरः २५
वज्रपञ्जरविन्यासाद्वज्रेणापि न हन्यते ।
हन्ति सर्वाणि रक्षांसि साधकेन्द्रो न संशयः २६

---

वृतिः । ...... पादद्वये कटिद्वये नाभौ चाष्टमावृतिः । इति अष्टावृतिन्यासो दशमः ।

1 वज्रपञ्जरन्यासमाह– १ ओं नमः हृदये । श्रीं–मुखे । ह्रीं –दक्षिणांसे । क्लीं वामांसे । ग्लौं-दक्षिणोरौ । गं–वामोरौ च न्यसेत् । (शेषेण व्यापनं ?) २ एभिरेव मन्त्रैः कण्ठे नाभौ पार्श्वयोः पृष्ठे हृदये च न्यसेत् । ३ पुनरेतैरेव मन्त्रैः शिरसि वक्त्रे नेत्रयोः नासिकयोश्च न्यसेत । ४ पुनरेतैर्मन्त्रैः दक्षिणपाणिसन्धिषु अग्रे च न्यसेत् । ५ पुनः एतैरेव मन्त्रैर्वामपाणिसन्धिषु अग्रे च न्यसेत् । ६ पुनः एतैरेव मन्त्रैर्दक्षिणपादसन्धिषु अग्रे च न्यसेत् । ७ पुनरेतैरेव मन्त्रैर्वामपादसन्धिषु अग्रे च न्यसेत् । ८ पुनरेतैरेव मन्त्रैर्मूर्ध्नि वक्त्रे हृदये उदरे पार्श्वयोश्च न्यसेत् । पुनरेतैर्मन्त्रैर्मूर्ध्नि वक्त्रे हृदये उदरे कटौ ऊरुपार्श्वयोश्च न्यसेदिति । (अनयोरर्धश्लोकमध्ये एक अर्धश्लोक अधिकं इत्याभाति विनायकोदये मूर्ध्नि वक्त्रे हृदये सक्थौ पादयोर्न्यसेदित्युक्तम् ।)

तुण्डन्यासं[1] न्यसेत्तश्चात्सर्वशत्रुविदाशनम् ।
रत्नतुण्डो वेदतुण्डोऽमृततुण्डस्त्रिमूर्तयः १२७
प्रधानदेवतातुल्यास्त्रिमूर्तिसदृशप्रभाः ।
शिरोहृदयगुह्येषु न्यासस्तेषां प्रकीर्तितः २८
तारं श्रीबीजमुच्चार्य विघ्नबीजं स्वनामकम् ।
तुण्डशब्दं चतुर्थ्यन्तं हार्दान्तं विन्यसेत्क्रमात् २९
ततो मन्त्री प्रकुर्वीत मिथुनन्यासमुत्तमम्[2] ।
मूर्धांसहृदये गुह्ये पादयोश्च रमादिभिः ३०
मिथुनैः पञ्चभिश्चैव ध्रुवाद्यैश्च नमोन्तिकैः ।
स्वस्वबीजादिभिर्मन्त्रैरेभिरुक्तपदेषु च ३१
नाभौ वामकटीदक्षकटिकण्ठेषु जत्रुगोः ।
आमोदाद्यैश्च षड्विघ्नैः स्वबीजाद्यैः क्रमान्न्यसेत् ३२
पार्श्वयुग्मे निधीयुग्मौ स्वबीजाद्यौ नमोन्तिकौ ।
व्यापयेन्मूलमन्त्रेण त्रिवारं तदनन्तरम्[3] ३३

---

९ पुनरेतैर्मन्त्रैर्हृदये वक्त्रे चक्रपद्माभयवरदस्थानेषु न्यसेत् । १० पुनरेतैर्मन्त्रैर्मुखे अंसे हृदये अङ्घ्रिद्वये ऊरुद्वये उदरे च न्यसेदिति दशप्रकारोपेतो वज्र-पञ्जरविन्यास एकादशः ।

1 तुण्डन्यासमाह– ओं श्रीं गं रत्नतुण्डाय नमः शिरसि । ओं श्रीं गं वेदतुण्डाय नमः हृदये । ओं श्रीं गं अमृततुण्डाय नमः गुह्ये च न्यसेदिति तुण्डन्यासो द्वादशः । 2 मिथुनन्यासमाह यथा– ओं श्रीं रमारमेशाभ्यां नमः मूर्ध्नि । ओं ह्रीं गिरिजावृषाङ्काभ्यां नमः अंसयोः । ओं क्लीं रतिमन्मथाभ्यां – हृदये । ओं ग्लौं भूवराहाभ्यां – गुह्ये । ओं गं पुष्टिगणपतिभ्यां – पादयोः । ओं गं सिद्ध्यामोदाभ्यां – नाभौ । गं समृद्धिप्रमोदाभ्यां – वामकटचाम् । गं कान्तिसुमुखाभ्यां – दक्षिणकटचाम् । गं मदनावतीदुर्मुखाभ्यां – कण्ठे । गं मदद्रवाविघ्नाभ्यां – वामजत्रुणि । गं द्राविणीविघ्नकर्तृभ्यां – दक्षिणजत्रुणि । गं वसुधाशङ्खनिधिभ्यां – वामपार्श्वे । गं वसुमतीपद्मनिधिभ्यां दक्षिणपार्श्वे च न्यसेदिति मिथुनन्यासस्त्रयोदशः ।
3 व्यापकन्यासमाह– त्रिवारं मूलेन व्यापय्य ओं नमः मूर्ध्नि । श्रीं – फाले । ह्रीं – दक्षिणनेत्रे । क्लीं – वामनेत्रे । ग्लौं – मुखे च न्यस्य गं गणपतये

मूर्ध्नि फाले तथा चाक्ष्णोरास्ये साधकसत्तमः ।
शेषेण मनुना चैव व्यापयेत्सर्वमुच्चरन् १३४
[ मूर्ध्न्यास्ये हृदये गुह्ये पादयोः सृष्टिरुच्यते ]
हृदि मूर्धास्यचरणगुह्येषु च यथाक्रमम् ।
उक्तप्रकारैस्ताराद्यैः पञ्चभिस्स्थितिरुच्यते[1] ३५
विघ्नबीजादिभिः पश्चात् ध्रुवान्तैश्च पदादिषु ।
स्थानेष्वेतेषु कर्तव्यो विन्यासोऽयं विपश्चिता ३६
संहृतिस्थितिसर्गाख्या न्यासास्तत उदाहृताः ।
तुण्डन्यासस्तु[2] कर्तव्यः पूर्वोक्तविधिना बुधैः ३७
वक्त्रन्यासं ततः कुर्याच्चतुर्वारं तु मन्त्रवित् ।
तथा वक्त्रेषु विन्यस्य बीजैः पञ्चभिरेव च ३८
तत्रैव व्यापकं न्यस्य सर्वलोकप्रियो भवेत् ।
विनायकाद्यष्टमूर्तिन्यासोऽयं[3] वक्ष्यतेऽधुना ३९
विनायको विरूपाक्षः क्रूरकर्माऽपराजितः ।

---

इत्यादिना व्यापयेदिति व्यापकन्यासश्चतुर्दशः ।

1 सृष्टिसंहारयोस्स्थानं नोक्तं सृष्टिविपरीतत्वेन संहारः सिद्धः । आपाततः स्थितिवैपरीत्यं सूचितम् अतः सम्प्रदायानुरोधेन सृष्टिसंहारावुक्तौ । यथा– सृष्टिन्यासः – ओं श्रीं नमः शिरसि । ह्रीं – मुखे । क्लीं – हृदये । ग्लौं – गुह्ये । गं – पादयोः । इति सृष्टिन्यासः पञ्चदशः ।
ओं –हृदये । श्रीं – मूर्ध्नि । ह्रीं – मुखे । क्लीं – पादयोः । ग्लौं – गुह्ये । इति स्थितिन्यासः षोडशः । ओं गं – पादयोः । ग्लौं – गुह्ये । क्लीं – हृदये । ह्रीं – मुखे । श्रीं – शिरसि । न्यसेदिति संहारन्यासः सप्तदशः ।

2 पूर्वोक्ततुण्डन्यासं कृत्वा पूर्वोक्तवक्त्रन्यासं चतुर्वारं कृत्वा ऊर्ध्वादिवक्त्रेषु पञ्चबीजानि न्यस्य शेषेण व्यापकं कुर्यात् । [ व्यापकन्यासं कुर्यात् ]

3 अष्टमूर्तिन्यासमाह तथा– ओं श्रीं गं विनायकाय नमः शिरसि । ओं श्रीं गं विरूपाक्षाय – भ्रूमध्ये । ओं श्रीं गं क्रूरकर्मणे – वक्त्रे । ओं श्रीं गं अपराजिताय – कण्ठे । ओं श्रीं गं च[तु]ण्डसेनाय – हृदये । ओं श्रीं गं हयग्रीवाय – गुह्ये । ओं श्रीं गं कराळास्याय – जानुद्वये । ओं श्रीं गं चण्डत्रिक्रमाय – पादयोश्च न्यसेदिति मूर्तिन्यासः अष्टादशः ।

चतुण्डसेनो हयग्रीवः करालास्यस्तथैव च १४०
चण्डादिविक्रमश्चाष्टौ मूर्तयः समुदीरिताः ।
शिरो भ्रूमध्यवक्त्रेषु कण्ठे हृद्गुह्यजानुषु ४१
पादयोर्विन्यसेद्विद्वान् विनायकमुखान् क्रमात् ।
तारश्रीविघ्नबीजानि प्रोक्त्वा ङेन्तसमन्वितान् ४२
विनायकादीन् विन्यस्यन्नमोन्तान् मन्त्रवित्तमः ।
न्यासोऽथ दशमूर्तीनां[1] कथ्यते विधिवद्बुधैः ४३
गजवक्त्रश्चैकदन्तो लम्बोदर इहाष्टमः ४४
क्षिप्रप्रसादः स महागणपो दशमूर्तयः ।
शिरोललाटभ्रूवक्त्रकण्ठहृज्जठरेषु च ४५
स गुह्यजानुपादेषु न्यसेद्विघ्नादिकान् क्रमात् ।
श्रीविघ्नबीजताराद्यैः प्रोक्त्वा विघ्नादिकान् क्रमात् ४६
चतुर्थ्यन्तसमायुक्तान् नमोन्तान् विन्यसेत्क्रमात् ।
अथ ब्राह्म्यादिविन्यासः[2] कथ्यते सर्वसिद्धये ४७
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराहीन्द्राणीचामुण्डामहालक्ष्म्यः प्रकीर्तिताः ४८

---

1 दशमूर्तिन्यासमाह ओं श्री गं विघ्नाय नमः शिरसि । उत्तरत्र प्रतिनामादौ तारश्रीविघ्नबीजानि अन्ते नमःशब्दं च योजयेत् । विनायकाय ललाटे । वीराय भ्रुवोः । वरदाय मुखे । शूराय कण्ठे । गजवक्त्राय हृदये एकदन्ताय जठरे । लम्बोदराय गुह्ये । क्षिप्रप्रसादनाय जानुद्वये । महागणपतये पादद्वये च न्यसेदिति दशमूर्तिन्यास एकोनविंशः । 2 ब्राह्म्यादिन्यासमाह – अत्राप्यादौ प्रणवश्रीविघ्नबीजानि अन्ते नमः शब्दं च योजयेत् । ब्राह्म्यै शिरसि । माहेश्वर्यै ललाटे । कौमार्यै भ्रूमध्ये । वैष्णव्यै मुखे । वाराह्यै अंसे । इन्द्राण्यै कट्याम् । चामुण्डायै गुह्ये । महालक्ष्म्यै हृदये च न्यसेत् । तारादियोजनमष्टभैरवेष्वपि समानम् । असिताङ्गभैरवाय शिरसि । रुरुभैरवाय ललाटे । चण्डभैरवाय भ्रूमध्ये । क्रोधभैरवाय मुखे । उन्मत्तभैरवाय अंसे । कपालिभैरवाय कट्याम् । भीषणभैरवाय गुह्ये । संहारभैरवाय हृदये च न्यसेदिति ब्राह्म्यादिन्यासो त्रिंशः ।

शिरो ललाटभ्रूमध्यवक्त्रांसकटिषु क्रमात् ।
गुह्ये च हृदये न्यस्येद्ब्राह्म्याद्याश्चाष्टमातरः १४९
असिताङ्गादिकानष्टौ मातृस्थानेषु भैरवान् ।
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तकपालिनः ५०
भीषणाख्योऽथ संहारो भैरवाः सदीमुरिताः ।
आदौ प्रणवमुच्चार्य रमाद्यं गणपत्यकम् ५१
ब्राह्म्यादीन् भैरवानष्टौ नमोन्तान विन्यसेत्क्रमात् ।
विघ्नो विनायको वीरो वरदः शूर एव च [शूरो वरद इत्यपि]
शिरोललाटयुङ्नेत्रघ्राणास्येषु[1] यथाक्रमम् ५२
षड्बीजानि प्रविन्यस्य शेषेण व्यापयेदथ ।
पुनर्व्यापकसंज्ञोऽयं न्यासः सर्व समृद्धिदः ५३
हृदयादिषडङ्गानि[2] हृदयाद्येषु विन्यसेत् ।
एवं महागणेशस्य न्यासजालं समीरितम् ५४
एभिर्विन्यस्य मन्त्री स्यान्न्यासे वीरपराक्रमः ।
प्रथमं मातृकान्यासं द्वितीयं तु दशाङ्गकम् ५५
विघ्नेशाद्येकपञ्चाशन्मूर्तिन्यासं तृतीयकम् ।
कलान्यासं चतुर्थं तु तत्वन्यासस्तु पञ्चमः ५६
षष्ठस्तु मर्तिविन्यासो वक्त्रान्यासस्तु सप्तमः ।
अष्टमो मूर्ति [वर्ण] विन्यासः पदन्यासस्तु तत्परः ५७
दशमोऽष्टावृतिन्यासस्तत्परो वज्रपञ्जरः ।
द्वादशस्तुण्डविन्यासो मिथुनं तु त्रयोदशः ५८
चतुर्दशं व्यापकं तु सृष्टिन्यासस्तु तत्परः ।

---

1 व्यापकन्यासमाह– ओं नमः शिरसि । श्रीं ललाटे । ह्रीं नेत्रयोः । क्लीं नासिकयाम् । ग्लौं मुखे । [ह्रीं दक्षिणनेत्रे । क्लीं वामनेत्रे । ग्लौं नासिकायाम् । गं मुखे इति युक्तम्] (ग) गणपतये इत्यादिना व्यापयेत् इति एकत्रिंशो न्यासः । 2 हृदयादिषडङ्गन्यासः २ पत्रे लिखितः सोऽत्रानुसन्धेयः । इति षडङ्गन्यासो द्वात्रिंशः ।

षोडशस्तु स्थितिन्यासः संहृतिस्तदनन्तरम् १५९
अष्टादशोऽष्टमूर्तेः स्याद्दशमूर्तेस्ततः परः ।
विंशो ब्राह्म्यादिविन्यासो व्यापकश्चैकविंशतिः ६०
द्वाविंशतिः षडङ्गानामेवं न्यासविधिक्रमः ।
(एवं महागणेशस्य न्यासजातः समीरितः ६१
एभिर्विन्यस्तमन्त्री स्यान्नयासैर्विघ्नपराक्रमः) ।
अशक्तश्चेन्मातृकादिद्वादशन्यासमाचरेत् ६२
तदशक्तस्तदर्धं वा मातृवर्णपदद्वयम् ।
इति संक्षेपतो न्यासविधिः प्रोक्तो मनीषिभिः ६३

इति वासिष्ठसंहितायां प्रथमः पटलः

अथ पूजाविधिं वक्ष्ये गणेशस्य महात्मनः ।
विधिवत्पूजितो येन तस्य सिद्धिं प्रयच्छति १
अथ स्वदेहे तत्पीठं कल्पयित्वा विधानतः ।
तत्रैव मूर्ध्नि स्वगुरुं मूलाधारे विनायकम्[1] २
मूलाधारे च स्वहृदये भ्रूमध्ये मूर्ध्नि[2] विद्यया ।
सम्पूज्य तं चतुर्वारं मूलमन्त्रं जपेत्पुनः[3] ३
भावयेत्परमानन्दं चिन्मात्रकमनौपमम् ।
अखण्डमण्डलाकारमात्मानं मन्त्रवित्तमः ४
व्योमाम्बुजे शिवमुखान् गुरुवक्त्रगम्यान्
दिव्याननेकमहिमाङ्कुरसिद्धसेव्यान् ।
कारुण्यभारभरितानपि दृश्यमा(ना)न्
दिव्याकृतीन्[4] स्मरतु सम्यगभीष्टसिद्ध्यै ५

1 मूर्ध्नि गुरुं मूलाधारे गणपतिं च सम्पूज्य । 2 मूलाधारे स्वहृदये भ्रूमध्ये मूर्ध्नि मूलेन सम्पूज्य । 3 मूलमन्त्रं चतुर्वारं जपेत् ।
4 सदाशिवादिगुरुपङ्क्तिं व्योमाम्बुजे समर्चयेत् ।

सदाशिवो महेशश्च गणेशो गणनायकः ।
विश्वानन्दस्तथेशानः शम्भुर्भुवनसंज्ञकः ६
सत्यानन्दः समाख्यातः परमानन्दसंज्ञकः ।
नन्दीश्वरो महाकालस्तथा नन्दीश्वरः परः ७
शिवादिगुरुपङ्क्तीश्च द्वादशान्ते समर्चयेत् ।
मूलशक्तिपराशक्त्योरैक्यं सम्भावयेत्सुधीः ८
रमाबीजादिभिः पश्चात् न्यासस्थानेषु पञ्चभिः[1] ।
आपादतळतां [सं] व्याप्तां लेखां तेजोवतीं पराम् ९
पीठं नाना(ठानना)पराशक्तिः प्रभोः प्रकृतिरूपिणी ।
पूजिते धीमता पीठे पूजिताः सर्वदेवताः १०
तस्मिन् पीठार्चनं कार्यं पीठं पीठं हि सम्पदाम् ।
आधारशक्तिप्रकृतिकूर्मानन्तधरादयः[2] ११
इक्षवम्बुधी रत्नमयं द्वीपं कल्पमहीरुहम् ।
मणिमण्टपिकां रत्नसिंहासनमनन्तरम् १२
आधारशक्तिमारभ्य श्वेतच्छत्रान्तमन्त्रकैः ।
पद्गुह्यजानुजङ्घोरुमूलेषु कटिमूलयोः १३
स्वाधिष्ठाने मणौ पूरेऽनाहते च यथाक्रमम् ।
आधारशक्तिपूर्वैस्तु श्वेतच्छत्रावसानकैः १४
ङेनमोन्तैः प्रविन्यस्य ध्रुवाद्यैः स्वस्वनामभिः ।
दक्षिणोर्वंसयोर्वामभुजमूलांसयो [लोरुषु] र्न्यसेत् १५

---

1 मूर्धास्यहृदयगुह्यपादेषु रमादिपञ्च बीजानि विन्यसेत् ।

2 देहे पीठन्यासमाह– ओं आधारशक्त्यै नमः पादयोः । मूलप्रकृत्यै–गुह्ये । कूर्माय – जानुद्वये । अनन्ताय – जङ्घयोः । पृथिव्यै – ऊरुमूलयोः । (क्षीराणे वास्तुपुरुषाय) इक्षुसमुद्राय – कटिमूलयोः । रत्नद्वीपाय – स्वाधिष्ठाने । कल्पवृक्षाय – मणिपूरे । मणिमण्डपाय – अनाहतचक्रे । रत्नसिंहासनाय – विशुद्धिचक्रे । श्वेतच्छत्राय – आज्ञाचक्रे च सम्पूज्य ।

धर्मादिकानधर्मादीन् गुह्यदक्षिणपार्श्वयोः ।
मस्तके वामपार्श्वे च विन्यसेत्सुसमाहितः ॥ १६
मूलमानन्दकन्दञ्च संविन्नालमथाम्बुजम् ।
कर्णिकां केसरांश्चैव दळान्यथ दळाग्रकम् ॥ १७
परिवेषञ्च पूर्वादि बीज(बिन्दु)त्रयमथो गुणान् ।
मायां विद्यामथात्मानमन्तरात्मानमेव च ॥ १८
परमात्मानकं ज्ञानपूर्वमात्मानमेव च ।
रत्नसिंहासनं मध्येऽनन्ताद्यासनमेव च ॥ १९
शुक्लशय्यां च परमानन्दरूपं न्यसेत्क्रमात्
तत्तद्बीजसमायुक्तैर्ङेनमोन्तैर्ध्रुवादिभिः ॥ २०
हृदूर्ध्वपूर्वं विन्यस्येन्नामभिस्तत्स्वरूपकैः ।
पीठमेवं प्रविन्यस्य सर्वतत्त्वात्मकं परम् ॥ २१
तीव्रा च ज्वालिनी नन्दा भोगदा कामरूपिणी ।
उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ॥ २२
पूर्वादिकेसरेष्वष्टौ नवमीं कर्णिकोपरि ।
पीता श्वेताऽर्जुना कृष्णा धूम्रा रक्ताऽरुणा सिता ॥ २३

---

1 दक्षिणोरुदक्षिणबाहुवामबाहुवामोरुमूलेषु – धर्माय– । ज्ञानाय– । वैराग्याय– ऐश्वर्याय नम इति सम्पूज्य गुह्ये दक्षिणपार्श्वे शिरसि वामपार्श्वे च – अधर्माय– । अज्ञानाय– । अवैराग्याय– । अनैश्वर्याय नम इति सम्पूज्य हृदये पूर्वादिषु – मूलाय – आनन्दकन्दाय– संविन्नाळाय – पद्माय – कर्णिकायै–केसरेभ्यो –दळेभ्यो–दळाग्रेभ्यो– । मध्ये– परिवेषाय– । मध्ये एव पूर्वे ऊं त्रिवर्णात्मने – अ अर्कमण्डलाय – उ सोममण्डलाय – म वह्निमण्डलाय – सं सत्त्वाय– रं रजसे – तं तमसे – मं मायायै– विं विद्यायै– अं आत्मने– उं अन्तरात्मने– मं परमात्मने– ओं ह्रीं ज्ञानात्मने रत्नसिंहासनाय – अनन्ताय – (कूर्मासनाय– आधारशक्तिकमलासनाय–) हृदयपद्मस्य पूर्वादिकेसरेषु– तीव्रायै– ज्वालिन्यै– नन्दायै– भोगदायै – कामरूपिण्यै– उग्रायै– तेजोवत्यै– सत्यायै– विघ्ननाशिन्यै– मध्ये कर्णिकोपरि– विघ्ननाशिन्यै– ओं श्रीं ह्रीं क्लीं ग्लौं गं नमो भगवते सर्वभूतात्मने सर्वशक्तियुक्ताय पद्मासनाय नमः इति पीठपूजा ।

रक्ताभा वर्णतः प्रोक्तास्तीव्राद्या नवशक्तयः ।
पाशाङ्कुशधराः सर्वाः सर्वालङ्कारभूषिताः २४
पद्मासनस्थाश्चार्वङ्ग्यः पीनवक्षोरुहाननाः ।
प्रोक्त्वा तारादिषड्बीजं हार्दं भगवते पदम् २५
सर्वभूतात्मने सर्वशक्तियुक्ताय तत्परम्
पद्मासनाय नत्यन्तो विघ्नपीठमनुस्त्वयम् २६
अनुपममखिलार्तिध्वंसनं व्योमपद्म
प्रवरमगणिताद्यत्पत्रकं स्वच्छवर्णम् ।
दिवसरजनिनाथभ्राजमानाङ्कमध्ये
स्मरतु पुनरमुष्मिन् ज्योतिषां धाममाद्यम् २७
निपतितमथ यस्मात् तेजसः सन्निकाशात्
लघुतरकणमुद्यत्कोटिभास्वत्प्रकाशम् ।
हृदयनिहितमूर्तिं भावयित्वा समर्च्य
मनुविदनुविदध्यात्सार्धमङ्गादिषट्च [ भिश्च ] २८
भावयित्वैवमावाह्य मूलेनाथ विनायकम् ।
शिशः [illegible]ाप्य मूलेन मुन्याद्यङ्गं ततो न्यसेत् २९
विघ्नत्रयादिकुसुमं निध्यन्तमपि पूजयेत् ।
शिस्त्रिवारं च मूलाभ्यां देवं देवीं च पूजयेत् ३०
त[illegible] [illegible]रामृतान्नेन देवं तुष्टं विभावयेत् ।
पुनर्मूलेन सम्पूज्य भावयेन्मन्त्रवित्तमः ३१
सर्वानेव परीवारान् देवे प्रविलयं नयेत् ।
तेजोरूपं ततो देवं द्वादशान्ते नियोजयेत् ३२
गुरुरूपं च तत्रैव पूजयेत्समनन्तरम् ।
स्वगुरो[रो]र्मूलदेवस्य (मन्त्रस्य) क्यैक्यं भावयेत्सुधीः ३३
[illegible]प्य पूजाकुसुमान्याघ्राय च विसर्जयेत्
अन्तर्यागं समाप्यैवं बहिर्यागं समाचरेत् ३४

पुरतो वेदिकायां तु विलिखेद्यन्त्रमुत्तमम् ।
कर्णिकायां लिखेत्पूर्वं नवयोनि (त्रिषट्कोणं) महाप्रभम् ३५
अष्टपत्रं बहिःपत्रं वृत्तत्रयसमन्वितम् ।
चतुरश्रद्वयं लिख्यात् बाह्ये वज्रादिलक्षितम् ३६
ततो मध्ये त्रिकोणान्तस्तेजःपुञ्जोपबृंहितम् ।
चन्द्रक्ष्मातारकावीतं क्रमोत्क्रमविनायकम् ३७
यन्त्रस्य मध्ये साध्याख्यां लिखेत्तत्र विधानतः ।
तस्याग्रदक्षपृष्ठेषु[1] वामभागे यथाक्रमम् ३८
रमादिक्ष्मान्तबीजानि तथा लिख्याद्विचक्षणः ।
पूर्वाश्रौ पश्चिमाश्रौ च बीजे पाशाङ्कुशोद्भवे ३९
दक्षिणाश्रिषु तारादिबीजत्रयमथालिखेत् ।
कन्दर्पादीनि चान्यानि उत्तरे त्रीणि चालिखेत् ४०
वृत्ताष्ट[षट्]कोणयोरन्तः षडङ्गान्यभितो लिखेत् ।
अग्न्यादि[2]मूलमन्त्रस्य शिष्टान् वर्णांस्त्रिशस्त्रिशः ४१
पूर्वादिषु दळेष्वेवमीशे वर्णैः क्रमाल्लिखेत् ।
तद्बाह्ये प्रथमे वृत्ते तारश्रीसम्पुटीकृतान् ४२
अकारादिक्षकारान्तान् वर्णान् पूर्वादितो लिखेत् ।
तानेव मुखबीजाभ्यां[3] सम्पुटीकृत्य तद्बहिः ४३
वृत्तेक्षकारप्रथमानकारान्तान् समालिखेत् ।
पाशाङ्कुशाभ्यां तद्बाह्ये[4] वृत्तमावेष्टयेद्बुधः ४४
चतुरस्राष्टकोणेषु[5] पृथिवीबीजमालिखेत् ।
एवं यन्त्रं समालिख्य हस्तमात्रं विधानतः ४५

---

1 यन्त्रे यन्त्रपूजकयोर्मध्ये पूर्वा दिक् अत एव त्रिकोणस्याग्रकोणमभिमुखं भवति अतः अग्रात् पूर्वत आरभ्य प्रादक्षिण्येन लिखेत् । चन्द्रादीन् पुनः प्रविश-पूर्वादिष्वेव लिखेत् । 2 अग्न्यादि इति पूर्वमव षड्गबीजेषु अन्वेति । 3 तारश्रीबीजाभ्यां । 4 वृत्तबाह्ये । 5 गोपुरान्तः अष्टकोणेषु ।

लिखेदरत्निमात्रं वा तत्र देवान्प्रपूजयेत् ।
सौवर्णे राजते पट्टे ताम्रे वा स्थण्डिलेऽपि वा ४६
रक्तचन्दनपीठे वा क्षौमे वाऽच्छपटेऽपि वा ।
यन्त्रं तु द्विविधं प्रोक्तं यागयोग्यमिदं परम् ४७
रक्षा कार्या द्वितीयेन निष्फलं तद्विपर्यये ।
अन्यत्प्रकारं वक्ष्यामि यन्त्रं केचिन्मताश्रितम् ४८
अन्तर्वर्तुळसंस्थाया हृल्लेखायाः कपोलयोः ।
अधरे साध्यनामार्णान् साधकस्योत्तरे लिखेत् ४९
अन्तराऽग्निश्रियोः [ग्नीशयोः] कर्म साधकांशे समाऽलिखेत् ।
यन्त्रमन्यत्प्रकारेण प्राहुरन्ये च मन्त्रिणः ५०

बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगं दिक्षु[1] लक्ष्मी-
मायाकन्दर्पभूमीस्तदनु रसपुटेष्वालिखेद्बीजषट्कम्[2] ।
तत्सन्धिष्वङ्गमन्त्रं (न्)[3] वसुदळकमले मूलमन्त्रस्य वर्णान्
शिष्टान् पत्रेषु विद्वान् विलिखतु गुणशश्चान्त्यमन्त्ये पलाशे[4] ॥

आवीतं लिपिभिः क्रमोत्क्रमवशात् पाशाङ्कुशाभ्यामपि
क्ष्मागेहद्वितयेन संवृतमिदं यन्त्रं गणाधीशितुः ।
[लाक्षाकुङ्कुमरोचनामृगमदैर्भूर्जे वरे हेम्नि वा
संलिख्याभिवहन्लभेत सकलैः सम्प्रार्थनीयां श्रियम् ][5] ५२

एवं यन्त्रवरं विलिख्य सुखदं दुःखाम्बुधिध्वंसनं
तस्मिन् विघ्नमथार्चयेत विधिना यन्त्रं विदध्यात्क्रमात् ।
सम्प्राप्नोत्यखिलां श्रियं गणपतेरस्य प्रसादादिह
स्वर्गाख्ये परमेश्वरस्य पदयोः सायुज्यमन्तेऽश्नुते ५३
अथात्र यन्त्रे पूजायां विधानं वक्ष्यतेऽधुना ।

---

1 अग्रादारभ्य । 2 तारादि । 3 वृत्तषट्कोणमध्ये ।
4 अन्त्यपत्रे अन्त्याक्षरं ।
5 शारदातिलकोक्तोत्तरार्धं विलिखितं श्लोकपूरणार्थम् ।

महागणपयन्त्रस्य गुर्वादेशात्क्रियोच्यते ५४
अथ शङ्खार्चनं कुर्याच्छैवागमविधानतः ।
आत्मानं गन्धपुष्पाद्यैरलङ्कृत्याथ मन्त्रवित् ५५
अभ्यर्च्याधारशक्त्याद्यैः पूर्ववद्यन्त्रमण्डले ।
रत्नद्वीपादिकान् ध्यात्वा प्रतिमायां विनायकम् ५६
ध्यात्वाऽऽवाह्य सुवर्णायां पूजयेद्विधिवत्तदा ।
ध्यायेद्वारणलक्षयोजनविशालेक्षवब्धिमध्यस्थितम् ५७
रत्नद्वीपमनेकसूर्यकिरणं रत्नौघकान्त्यारुणम् ।
दिक्साहस्रशरोर्ध्वयोजनपरीणाहं शतैकोच्छ्रितं
नानारत्नसमाश्रयं सुरकुजा[ला]कीर्णं सुधाभाजनम् ५८
रत्नद्वीपस्य मध्ये महदुपविपिनं स्वर्णपाषाणकान्ति
नानापक्वफलोदरं सुरलताकीर्णं गजेन्द्रालयम् ।
साहस्रेण च योजनान्वितपरीणाहं महानन्दनं
नानापुष्पनतालिकोमलरवं सर्वर्तुसेव्यं स्मरेत् ५९
तन्मध्ये मणिमण्टपं मणिगणच्छायामणीकृन्नभो-
भूम्याशान्तरमब्धिकोणममलं मुक्तावितानोज्वलम् ।
विस्ताराच्छतयोजनं सुरमणिस्तम्भं चतुर्द्वारकं
नानारत्नसुवर्णतोरणयुतं सौवर्णभित्त्युज्वलम् ६०
तन्मध्ये पारिजातं नवमणिविलसच्चारुदेहं द्रुमेन्द्रं
नित्यं सर्वर्तुसेव्यं कुसुमशरसप[लस]त्कोमलानेकघोषम् ।
नानाशाखोपशाखं रविपथशिखरं विस्तृतं मण्डपान्त[तः]
स्थूलाद्रि[स्थूलदि]ग्योजनाढ्यं खगकुलनिलयं चिन्तयेदिष्टसिद्धि
तन्मूले सिंहपीठं मणिगणखचितं भासिताशान्तराळं
प्रो....? द्योजनाङ्गं स्मरतु दशमहद्योजनाद्विस्तरास्यम् ।
मध्ये तन्मातृकाब्जे तदुदरनिलयं त्र्यश्रमङ्गाश्रवीतं
साष्टारं वह्निवृत्तं क्षितिपुरयुगलं त्र्यश्रमध्ये गणेशम् ६३

वामाङ्के विनिविष्टया करलसन्नालीकया लीलया
नानाभूषणभूषिताङ्गलतया देव्या समालिङ्गितम् ।
उद्यद्भानुसहस्रभास्वररुचिं बालेन्दुचूडामणिं
ध्यायेन्मन्त्रिवरो महागणपतिं भक्तैकचिन्तामणिम् ६४
शुद्धोपाधिगतो देवः सर्वसिद्धिं प्रयच्छति ।
न नानोपाधिगः सिद्धिं काष्ठहीनो यथाऽनलः ६५
हैमन्या प्रतिमा कार्या जिनसंख्याङ्गुलोच्छ्रिता ।
सूर्याङ्गुलोच्छ्रिता वाऽपि वस्वङ्गाग्न्यङ्गुलोच्छ्रिता ६६
विस्तारेण चतुर्थांशाद्ध्यानलक्षणसंयुता ।
आढ्यश्चेच्छतनिष्केण दशनिष्केण मध्यमः ६७
दरिद्रस्त्वेकनिष्केण कार्याऽप्यर्च्यां [र्चा] स्वशक्तितः ।
प्रतिमां कर्तुमाढ्यश्चेद्वित्ताशाठ्यविवर्जितः ६८
तारेण कनकाभावे ताराभावे तु ताम्रतः ।
ताम्राभावे सुरीत्या च रीत्यभावे त्वथासृजा[1] ६९
रक्ताभावेऽर्कवृक्षेण तदभावे तु मृत्स्नया ।
मृत्स्नाभावे कुशैः कार्या पूर्वस्मादुत्तरा लघुः ७०
तथावरणदेवानां कल्पिताः प्रतिमाः पृथक् ।
प्रधानप्रतिमा प्रो(क्त)प्रमाणार्धसमन्विता ७१
विशोध्य प्रतिमाः पूर्वं भस्मना कुशवारिणा ।
पञ्चगव्यकषायैश्च शुद्धोदैरस्त्रमन्त्रतः ७२
श्रीरुद्रपावमानीभिर्नृसूक्तेनाभिषिच्य च ।
अधिवास्य मुहूर्तान्तं पूजास्थानाग्रतो भुवि ७३
प्रधानमूर्तिमारभ्य तत्तदावरणक्रमात् ।
स्वे स्वे स्थाने निधायैतास्तत्तन्मूर्तिमनुं स्मरन् ७४
मूर्तिं गणेशगायत्र्या सङ्कल्प्य विधिवद्बुधः ।

1 रक्तचन्दनवृक्षेण ।

तस्यामावाहयेद्देवं गणेशं शम्भुमव्ययम् ७५
आवाहनादिषण्मुद्राः सकलाः सम्प्रदर्शयेत् ।
मातृकाश्च ततोन्यस्य गणेशस्य तु विग्रहे ७६
तुण्डन्यासं षडङ्गानां युगळं च प्रविन्यसेत् ।
ऋष्यादिकं ततः कृत्वा देवेशस्य च भक्तितः ७७
गुरूपदेशतः पश्चाद्धेतिमुद्राः प्रदर्शयेत् ।
ततः पुष्करमुद्राश्च दर्शयेच्च समाहितः ७८
अर्घ्यादिपुष्पपर्यन्तं उपचारान् प्रकल्पयेत् ।
मूलेन पञ्चवारं तु पूजयेत तयोः पदे ७९
पञ्चमूर्त्यावृतिः[1] पूर्वा रत्नतुण्डावृतिः[2] परा ।
रमादिभिस्तृतीया[3] स्यादामोदाद्यैश्चतुर्थिका[4] ८०
पञ्चम्यङ्गावृतिः[5] प्रोक्ता षष्ठी स्यादष्टमूर्तिभिः[6] ।
विघ्नाद्यैः सप्तमी प्रोक्ताऽप्यणिमाद्यैस्तथाऽष्टमी ८१
नवमी मातृभिः प्रोक्ता दशमी भैरवाष्टभिः ।
एकादशी लोकपालैर्द्वादशी वज्रपूर्वकैः ८२
विघ्नं[1] तत्कर्णिकायां तदनुयुगदिशास्वैश्वरे पञ्चमूर्ती-
स्त्र्यश्राग्रे वह्नितुण्डा[2]न् मिथुनयुगयुगान् त्र्यश्रबाह्ये दिशासु[3] ।
आमोदादीन् षडश्रे[4] हृदय [ऋतुमनून्] कोणषट्कान्तराळे[5]
बाह्यारेष्वष्टमूर्तीर्यजतु[6] वसुदळाभ्यन्तराळे चतुर्थे[7] ८३

1 आवरणमाह-- कर्णिकायां विघ्नमभ्यर्च्य चतुर्दिक्षु ईशे च गणञ्जयाय- विघ्नेशाय - एकदंष्ट्राय - वीराय - गजवक्त्राय - इति प्रथमम् ।

2 त्रिकोणाग्रेषु- रत्नतुण्डाय- वेदतुण्डाय - अमृततुण्डाय - इति द्वितीयम् ।

3 त्रिकोणबाह्ये पूर्वादि दिक्षु-- रमारमेशाभ्यां- गिरिजावृषाङ्काभ्यां - रतिमन्मथाभ्यां - भूवराहाभ्या - इति तृतीयम् । 4 अग्रे कोणे -- सिद्धचामोदाभ्यां - । आग्नेयकोणे- समृद्धिप्रमोदाभ्यां - । ईशकोणे- कान्तिसुमुखाभ्यां - । वारुणकोणे - मदनावतीदुर्मुखाभ्यां - । नैऋतकोणे - मदद्रवाविघ्नाभ्यां - । वायव्यकोणे - द्राविणीविघ्नकर्तृभ्यां - । षट्कोणपार्श्वयोः - वसुधाशङ्खनिधिभ्यां - । वसुमतीपद्मनिधिभ्यां - इति चतुर्थम् ।

5 षट्कोणाभ्यन्तराळे आग्नेयादि -- ओं गां हृदयाय इत्यादि पञ्चमम् ।

6 पूर्वाद्यष्टदळेषु -- विनायकाय - विरूपाक्षाय - क्रूरकर्मणे - अपराजिताय - तुण्डसेनाय - हयग्रीवाय - कराळास्याय - चण्डविक्रमाय - इति षष्ठम् । 7 अष्टदळाभ्यन्तराळे अन्त्यदळे चतुर्थदळे च -- विघ्नाय -

विघ्नादीनन्तराळेऽणिममुख[1]मुभयीवृत्तयोरन्तराळे[2]-
ऽप्यन्यस्मिन् मातृवर्गं[2] बहिरथ वलयाभ्यन्तरे भैरवांश्च[3] ।
इन्द्रादीनष्टकोणेष्वथ[4] कुलिशमुखानायुधानष्टकोणा-
ग्रेषु[5] प्रोक्ताऽर्कसंख्यावृतिरखिलविभूतिप्रदा कल्पशाखी ७४

गणञ्जयश्च विघ्नेश एकदंष्ट्रोऽथ वीरकः ।
गजवक्त्रश्च पञ्चैता मूर्तयः समुदीरिताः ७५

पीताच्छारुणधूम्राच्छनिभाः सर्व[प]विभूषणाः ।
गणञ्जयादयः प्रोक्ताः पाशाङ्कुशवराभयाः ७६

रक्ततुण्डो वेदतुण्डोऽमृततुण्डस्तथैव च ।
प्रधानदेवतातुल्यास्त्रिमूर्तिसमतेजसः ७७

त्रिकोणबाह्ये पूर्वादि त्रिषु दिक्षु समर्चयेत् ।
अग्रेऽथ बिल्ववृक्षाधः श्रियं श्रीपतिमर्चयेत् ७८

---

विनायकाय – वीराय – शूराय – वरदाय – गजाननाय – एकदन्ताय – लम्बोदराय – क्षिप्रप्रसादनाय – महागणपतये – इति सप्तमम् ।

1 तद्बाह्ये वृत्तान्तराळेऽष्टदिक्षु –– अणिमासिद्ध्यै – महिमासिद्ध्यै – गरिमासिद्ध्यै – लघिमासिद्ध्यै – ईशित्वसिद्ध्यै – वशित्वसिद्ध्यै – प्राप्तिसिद्ध्यै – प्राकाम्यसिद्ध्यै – इत्यष्टमम् । 2 तद्बाह्ये द्वितीय-वृत्तान्तराळे — ब्राह्म्यै – माहेश्वर्यै – कौमार्यै – वैष्णव्यै – वाराह्यै – इन्द्राण्यै – चामुण्डायै – महालक्ष्म्यै – इति नवमम् । 3 तद्वृत्तबाह्ये-ऽष्टदिक्षु — असिताङ्गभैरवाय – रुरुभैरवाय – चण्डभैरवाय – क्रोध-भैरवाय – उन्मत्तभैरवाय – कपालिभैरवाय – भीषणभैरवाय – संहारभैर वाय– इति दशमम् । 4 प्रथमभूपुरेऽष्टदिक्षु–– इन्द्राय – अग्नये– यमाय – निर्ऋतये– वरुणाय – वायवे – सोमाय – कुबेराय – ईशानाय–। नैर्ऋत्यामीशे च — अनन्ताय – ब्रह्मणे – इत्येकादशम् । 5 तद्बाह्ये द्वितीयगोपुरे पूर्वाद्यष्टदिक्षु — वज्राय – शक्तये – दण्डाय – खड्गाय – पाशाय– अङ्कुशाय – गदायै – त्रिशूलाय –। नैर्ऋत्यामीशे च – चक्राय– पद्माय– इति द्वादशावरणानि । सिद्धयामोदाग्रभागे ओं श्रीं ह्रीं क्लीं ग्लौं गं महाचापाय नमः इति वाहनं, कुबेररुद्रयोर्मध्ये ओं कुम्भोदराय नमः इति निर्माल्यधारिणं च पूजयेत् । इति द्वादशावरणम् ।

पद्मयुग्मधरा पद्मा, शङ्खचक्रधरो हरिः ।
दक्षिणे वटवृक्षाधो गौरीं गौरीपतिं यजेत् ७९
पाशाङ्कुशधरा गौरी, टङ्कशूलधरो हरः ।
पश्चिमे पिप्पलस्याधः रतिं रतिपतिं यजेत् ८०
रतिद्वर्युत्पलहस्ता च, कोदण्डेक्षुधरः स्मरः ।
सौम्ये प्रियङ्गुवृक्षाधो महीं पोत्रिणमर्चयेत् ८१
शुकव्रीह्यग्रहस्ताभूः गदाचक्रधरः किरिः ।
षट्कोणेषु च सम्पूज्या आमोदाद्याः प्रियान्विताः ८२
आमोदसिद्धिसहितमग्रकोणे समर्चयेत् ।
समृद्ध्या युतमभ्यर्चेत्प्रमोदं वह्निकोणके ८३
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् ।
दुर्मुखं मदनावत्या यजेद्वारुणकोणके ८४
विघ्नं मदद्रवायुक्तं नैर्ऋत्यां परिपूजयेत् ।
वायव्ये विघ्नकर्तारं द्राविण्या सह संयजेत् ८५
पाशाङ्कुशाभयाभीष्टधारिणोऽरुणविग्रहाः ।
गण्डभित्तिगळद्दानपूरधौतमुखाम्बुजाः ८६
विघ्नास्तत्प्रमदाः सर्वा मदाघूर्णितलोचनाः ।
एकहस्तधृताम्भोजा अन्येनालिङ्गितप्रियाः ८७
षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात् ।
निजप्रियाभ्यां सहितौ पूर्वोदीरितविग्रहौ ८८
षट्कोणाभ्यन्तराळेषु वह्न्याद्यादिषु यथाक्रमम् ।
षडङ्गदेवताः पूज्याः मन्त्रिणा हृदयादयः ८९
कुन्देन्दुपीतरक्ताच्छरक्ताः षट् चाङ्गदेवताः ।
वराभयकराः सर्वा भूषालङ्कृतविग्रहाः ९०
विनायको विरूपाक्षः क्रूरकर्माऽपराजितः ।
चण्डसेनो हयग्रीवः कराळास्यस्तथैव च ९१

चण्डादिविक्रमश्चाष्टौ मूर्तयः परिकीर्तिताः ।
पाशाङ्कुशाभयकरा रक्तवर्णाः स्वलङ्कृताः ९२
विनायकाद्या ध्यातव्यास्त्रिणेत्रा मन्त्रिणा मुने ।
तद्वद्विघ्नादयः सर्वे ध्यातव्या दशमूर्तयः ९३
विघ्नो विनायको वीरः शूरो वरद एव च ।
गजाननश्चैकदन्तो लम्बोदर इहाष्टमः ९४
क्षिप्रप्रसादोऽथ महागणपो दशमः स्मृतः ।
अणिमा महिमा चैव गरिमा लघिमा तथा ९५
ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च ।
महाष्टसिद्धयः प्रोक्ताः सर्वसिद्धिप्रदायकाः ९६
बालादित्यसमोद्योता अणिमाद्यष्टमूर्तयः ।
वराभयकरा ध्याता मन्त्रिणा मदविह्वलाः ९७
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराहीन्द्राणी चामुण्डा महालक्ष्मीः स्मृताऽष्टमी ९८
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तकपालिनः ।
भीषणाख्योऽथ संहारपूर्वका भैरवाः स्मृताः ९९
कृष्णारुणासिताः श्यामा रक्ताः श्वेतारुणासिताः ।
कपालशूलहस्ताश्च त्रिणेत्रा भैरवाः स्मृताः १००
इन्द्रो वह्निर्यमो दैत्यनायको वरुणो मरुत् ।
सोमेशावहिपो ब्रह्मा लोकपाला इमे स्मृताः १
इन्द्रः पीतोऽरुणो वह्निर्यमः कृष्णोऽसुरोऽसितः ।
श्वेतः पाशी मरुत्कृष्णः सोमः श्वेतः सितो हरः २
अनन्तः कपिलो ब्रह्मा रक्तवर्णः समीरितः ।
वज्रः पीतोऽरुणा शक्तिर्दण्डखड्गौ सितासितौ ३
पाशः श्वेतोऽङ्कुशो धूम्रः गदा शुक्लाऽरुणा रुजा ।
रक्तश्चक्रस्तथा पद्मं रक्तवर्णमुदाहृतम् ४

वज्रः शक्तिर्दण्डखड्गौ पाशाङ्कुशगदारुजाः ।
चक्रं पद्मं लोकपानामायुधाः परिकीर्तिताः १०५
द्वादशावृतिरित्युक्ता विघ्नेशप्रियवर्धिनी ।
भोगमोक्षप्रदा नृणां सर्वाभीष्टप्रदायकाः ६
पञ्चावृतिः समुद्दिष्टा कैश्चिदागमकोविदैः ।
मिथुनेनावृतिः पूर्वा षड्विघ्नैर्निधिसंयुतैः ७
द्वितीयाङ्गैस्तृतीयाऽन्या मातृभिर्लोकपालकैः ।
पञ्चावृतिरिति प्रोक्ता सर्वकामप्रदायिनी ८
रमाद्यैः प्रथमा प्रोक्ता षड्विघ्नैरपरा परा ।
अङ्गैरन्या लोकपालैः संक्षेपाच्चतुरावृतिः ९
सिद्धयामोदाग्रभागे तु महाचाषं समर्चयेत् ।
श्यामवर्णं महाकायं घण्टाभरणभूषितम् १०
शब्दब्रह्ममयं यत्र (न्त्र) संस्थं मूर्ति समर्चयेत् ।
तारादिविघ्नबीजान्तं महाचाषाय ते नमः ११
कुबेररुद्रयोर्मध्ये पूज्यः कुम्भोदराह्वयः ।
चतुर्भुजस्त्रिणेत्रश्च काळमेघासमद्युतिः १२
आवाहनादिपुष्पान्तैरुपचारैः प्रपूजयेत् ।
प्रत्येकमावृतिः प्रोक्ता देवताः सकला अपि १३
सुगन्धैररुणैः पुष्पैर्निश्छिद्रैश्च मनोहरैः ।
पुष्पयागं प्रकुर्वीत चतुर्वारं प्रधानके १४
गणानान्त्वेति मन्त्रेण तारश्रीविघ्नपूर्वकम्[1] ।
तारश्रीविघ्नमुच्चार्य ब्रह्मणे नम इत्यथ १५

1 ओं श्रीं गं गणानान्त्वेति चतुर्वारं प्रधाने पुष्पाञ्जलिं दद्यात् । ओं श्रीं गं ब्रह्मणे नमः इति देवस्य दक्षिणे पार्श्वे, ओं श्रीं गं विष्णवे नम इति देववामपार्श्वे ओं श्रीं गं रुद्राय नम इति शिरो देशे च त्रिमूर्तीः पूजयेत्। सव्याहृत्या स्वगायत्र्या त्रिवारं हृदयेऽर्चयेत् । उत्तरे स्थावरायेति शिरसि जङ्गमायेति च पूजयेत् ।

देवस्य दक्षिणे वामे विष्णवे नम इत्यथ ।
रुद्राय नम इत्यस्य शिरो देशे समर्चयेत् ११६
सव्याहृत्या स्वगायत्र्या त्रिवारं हृदयेऽर्चयेत् ।
उत्तारे स्थावरेत्युक्त्वा [स्थावरायेति] जङ्गमाय च मस्तके १७
अष्टगन्धाक्तदूर्वाभिर्मूलेनाष्टोत्तारं शतम् ।
मूर्ध्नि पुष्पाञ्जलिं कुर्याच्छतं दूर्वासमन्वितम् १८
विघ्नाद्यैर्नव[नाम?]भिः पश्चात्कुर्यादष्टोत्तारं शतम् ।
अष्टगन्धान्वितैः पुष्पै रक्तवर्णैः सुगन्धिभिः १९
चन्दनागरुरक्तेन्दुलघुदामायकुङ्कुमैः ।
अष्टगन्धमिति प्रोक्तं गाणपत्यं मनीषिभिः २०
नमो गणेशभक्तेभ्यस्तद्भक्तेभ्यो नमो नमः ।
अङ्गेभ्य आयुधेभ्यश्च भूषणेभ्यो नमो नमः २१
गणेभ्यः परिवारेभ्यः सर्वेभ्यश्च नमो नमः ।
पुष्पाञ्जलिं प्रकुर्वीत मूर्तौ देवस्य भक्तिमान् २२
एवं सम्पूज्य देवेशं भक्तिभावविधानतः ।
पूजयित्वा ततो घण्टां गन्धाद्यैर्मनुनाऽमुना २३
गजान्ते ध्वनिशब्दश्च मते स्वाहा ध्रुवादिकः ।
एष घण्टामनुः प्रोक्तः सर्वासुरविनाशनः २४
एवं घण्टां समभ्यर्च्य वादयेद्वामहस्ततः ।
मूलादिस्वस्वबीजाभ्यां धूपदीपौ प्रदर्शयेत् २५
गोमयेनोपलिप्योर्वीं गन्धपुष्पाक्षतैर्यजेत् ।
निवेद्यमग्रतः स्वर्णराजतस्थालिसम्भृतम् २६
कल्पयित्वाऽस्त्रमन्त्रेण सार्धं पुष्पेण संस्पृशेत् ।
पुनः सन्त्यज्य तत्पुष्पमिति संशोध्य बुद्धिमान् २७
मन्त्रमुच्चार्य गङ्गायाः सम्प्रोक्ष्याथाभिमन्त्र्य च ।
मुद्रां सुरभिसंज्ञां च मनुनाऽनेन दर्शयेत् २८

ओं श्रीं गं विविधभोगसाधिनि तिष्ठ तिष्ठ भोगान्
साधय साधय अपरिमित[तं] मनः(हः) पूरय पूरय
यादिक्षान्तमुक्त्वा क्लीं स्वाहा, अनेन मनुना
नैवेद्यस्य मुद्रां प्रदर्शयेत् ।
श्रुतिमयगळितपयोधर विगलत्कृतसारसौन्दर्या ।
प्रगतजनाभिमताप्तेः [प्त्यै] सुरभिर्भूयात सदाऽत्र यजनविधौ ॥
मूलेनैवं समभ्यर्च्य चतुर्वारं स्पृशन् जपेत् ।
परिषिच्याऽथ नैवेद्यमन्त्रं मन्त्री समुच्चरेत् १३०
तारादिविघ्नबीजान्तमुच्चार्यामुं जपेन्मनुम् ।
ऐं ठं वं रसनात्मने रसनेन्द्रियाय इदमन्नं
गृहाण ज्योतिषि चिदात्मनि जुहोमि स्वाहा नमः ॥
परेणैतेन मन्त्रेण मुद्रया च चिदात्मकम् ३१
निवेद्य पुरतः पूजां विराट्पुरुषविग्रहे ।
विघ्नेश्वरे परानन्दे यथा स्मृत्य निवेदयेत् ३२
अथ वक्ष्यामि संक्षेपात्कलशार्चाविधिक्रमम् ।
सर्वपापविशुद्ध्यर्थं भूतप्रेतनिवारणम् ३३
प्रधानदेवतापूर्वदेवतानां प्रियावहम् ।
देवानां ? जीवनोपायं त्रिगुणापहरं परम् ३४
चतुर्दळसमायुक्तं कर्णिकाकेसरोज्वलम् ।
पञ्चभूतात्मकं पञ्चभूतवर्णसमुज्वलम् ३५
हस्तमात्रं तदर्धं वा वृत्तात्रयसमन्वितम् ।
तद्बाह्ये भूपुरं युग्ममिति पद्मं समालिखेत् ३६
कर्णिकायां दळाग्रेषु क्रमाद्दिक्षु पुरादिषु ।
सौवर्णं राजतं ताम्रं कांस्यं मार्तिकमेव वा ३७
विधिवद्विन्यसेत्पञ्च कलशानपि मार्तिकान् ।
कषायैः पूरयेद्विद्वानक्षरौषधिपाचितैः[1] ३८

1 अक्षरसंख्याकौषधकषायैः ।

पञ्चवृक्षकषायैर्वा पञ्चगव्यैरथापि वा ।
रक्तचन्दनतोयैर्वा अष्ट (चाष्ट) गन्धाजलैरपि १३९
नाळिकेरजलैर्वापि गुडेनैव शुभोदकैः ।
मध्यकुमात्पूरयित्वा न्यासजातं पुरोक्तवत् ४०
पञ्चरत्नं विनिक्षिप्य पञ्चनिष्कसमन्वितम् ।
पूर्वोक्तवन्मध्यकुम्भे यन्त्रं सञ्चिन्त्य मन्त्रवित् ४१
चतुर्नवकलाः[1] सम्यगावाह्य मुनिपुङ्गव ।
पञ्चावरणसंयुक्तं मध्ये विघ्नेशमर्चयेत् ४२
रमादिमिथुनं दिक्षु कलशेषु यथाक्रमम् ।
आकाशादीनि भूतानि मध्यादिषु यथाक्रमम् ४३
स्वस्वबीजेन सम्पूज्य गन्धपुष्पाक्षतादिभिः ।
प्रत्येकं रक्तवस्त्रेण युग्मेन परिवेष्टयेत् ४४
विधिवत्पूजयित्वाऽथ नैवेद्यं च निवेदयेत् ।
अथवाऽष्टदळोपेतं पद्ममालिख्य तत्त्ववित् ४५
कुम्भमेकं तु तन्मध्ये न्यस्त्वा [न्यस्य] तत्र विनायकम् ।
पञ्चावरणसंयुक्तं पूजयेद्विधिवद्बुधः ४६
अग्निकार्यं ततः कुर्यादाचार्यः परमात्मवित् ।
अग्निकार्यं प्रवक्ष्यामि समासेन महामते ४७
आसने कल्पिते शुद्धे समासीनः पुरोमुखः ।
सपवित्रकरो मौनी सोष्णीषः सोत्तरीयकः ४८
गुर्वादिकं समभ्यर्च्य मातृकान्यासपूर्वकम् ।
न्यासजालं विधायाथ पूर्वादिषु विधानतः ४९
विधिवत्संस्कृते कुण्डेऽप्यथवा स्थण्डिलान्तरे ।
यन्त्रमालिख्यपूर्वोक्तं तन्मध्ये गाणपत्यकम् ५०
त्रिकोणान्तर्दक्षिणान्तं तारोमान्तर्हिते लिखेत् ।

---

1 चतुर्नवतिकलाः ।

विघ्नेशवह्निवीजे द्वे शक्तिपार्श्वे शिवाक्षरम् १५१
शैवागमोक्तमार्गेण कृशानोर्जननक्रियाम् ।
कुर्याद्विघ्नेशहोमान्तं विशेषस्तत्र कथ्यते ५२
भङ्क्त्वाऽथ नवधा मन्त्रं गाणपत्यं ध्रुवादिकम् ।
पूर्वपूर्वसमायुक्तं सर्वेभ्यो वै हुनेत्पुनः ५३
मन्त्रार्णसंख्यवारं तु जुहुयादिष्टसिद्धये ।
अथ विघ्नात्मको भूत्वा न्यासैः पूर्वसमीरितैः ५४
सम्पूज्याधारशक्त्याद्यैः पूर्ववद्वह्निमध्यमे ।
मन्त्रं सङ्कल्प्य पूर्वोक्तं द्वादशावरणं क्रमात् ५५
पञ्चावृत्याऽपि[1] विघ्नेशं विधिवत्तत्र पूजयेत् ।
परमान्नादिसंयुक्तं शष्कुलीमोदकान्वितम् ५६
समर्पयित्वा नैवेद्यं शेषं प्रोक्तवदाचरेत् ।
द्रव्यसंसादने काले साधयेत् द्रव्यमष्टकम् ५७
मोदकः पृथुको लाजास्सक्तवः सरसालकाः ।
नाळिकेरतिलारम्भाः पक्वाष्टद्रव्यमीरितम् ५८
नाळिकेरतिला लाजाः सक्तवः समुदीरितम् ।
चतुर्द्रव्यं नाळिकेरतिलैर्द्रव्यद्वयं स्मृतम् ५९
गुडमध्वाज्यसिक्तानि द्रव्याण्येतानि होमयेत् ।
एकस्मिन्नाळिकेरेऽत्र कुडवैकमिताः सिताः[2] ६०
मध्याज्यैकैकमानेन तदर्धे वा प्रकीर्तिते ।
अष्टाष्टमुष्टिमानाः स्युर्लाजाः पृथुकसक्तवः ६१
तिलाः कुडवमानाः स्युरष्टौ मोदाः प्रकीर्तिताः ।
पर्वाणीक्ष्वष्टसंख्यानि कादळाश्चाष्टसंख्यकाः ६२
अशक्तौ द्रव्यमानानां तदर्धकमितं भवेत् ।
अलाभेऽप्यष्टवस्तूनां चतुर्द्रव्याणि होमयेत् ६३

1 पञ्चावरणैर्वा । 2 सिताः-गुडम् ।

तदलाभे द्वयं वापि एकद्रव्येण वा पुनः ।
मोदकास्तुषरिक्ताः[1] स्युः पृथुका गन्धासंयुताः १६४
श्वेतवर्णास्तथा लाजाः सक्तवो बहुधा कृताः ।
निस्त्वग्रसाळखण्डाः स्युरष्टधा पर्वमध्यमे ६५
सोदकं नाळिकेरं स्यात्पलाष्टकमितं स्मृतम् ।
सिकतोपलभेदं? स्यात् कादळाश्चतुरङगुलाः ६६
एकैकमष्टधा भिन्नाः सितोदं गुडमुच्यते ।
सुगन्धिपिङ्गळाभासे मध्वाज्ये परिकीर्तिते ६७
प्रोक्षयेदस्त्रमन्त्रेण तद्द्रव्यं कुशवारिणा ।
द्रव्यलक्षणमित्युक्तं होमकार्ये गणेशितुः ६८
विघ्नेशोर्वीगणेशा (दिनेश) ग्निसोमेशहरिकञ्जजाः[2] ।
द्रव्याणां मोदकादीनां देवताः क्रमशः स्मृताः ६९
विघ्ननाशं स्थिरं(ां) कान्ति ऐश्वर्यं चायुरक्षयम् ।
विघ्नादयः प्रणश्यन्ति [प्रयच्छन्ति] समृद्धिञ्च बहुप्रजाः ७०
पृथक् पात्रगतं द्रव्यं प्रत्येकं दिक्षु पूजयेत् ।
तत्तद्देवात्मकं ध्यायेत् गन्धपुष्पादिभिः क्रमात् ७१
त्रिकोणं दक्षिणे कृत्वा वर्तुलत्रयसंयुतम् ।
पात्रं विन्यस्य तन्मध्ये गन्धपुष्पाद्यलङ्कृतम् ७२
तदन्तरे मोदकादिद्रव्यं पूर्वादिषु न्यसेत् ।
एकीकृत्याथ तत्सर्वं मधुरत्रयसञ्चितम् ७३
रक्षां कृत्वास्त्रमन्त्रेण द्रव्यं ब्रह्मात्मकं स्मरेत् ।
तन्मध्यतः समादाय हस्तेनैव तु होमयेत् ७४
एकैकनाळिकेरस्य द्वादशाष्टाब्धिसंमिताः ।
नीचमध्योत्तमाः प्रोक्ता होमास्ते मन्त्रवित्तमैः ७५
मुष्टिप्रपूरणद्रव्यमेकैकाहुतिरुच्यते ।

---

1 तुषरहिताः । 2 ब्रह्मा

तदर्धा मध्यमा प्रोक्ता त्वधमा तु तदर्धका १७६
चर्माणि नाळिकेराणामशेषाण्यनले क्षिपेत् ।
अधोमूलाग्रयुक्तानि शोधितानि यजेदथ ७७
संस्थापिताग्नौ मासान्तं शुक्लप्रतिपदादि च ।
होमयेदष्टभिर्द्रव्यैः सम्पुटाज्यसमन्वितैः ७८
चत्वारिंशत्सहस्राढ्यं चतुर्लक्षं तु होमयेत् ।
चतुःसहस्रसंयुक्तं चतुःशतसमन्वितम् ७९
चत्वारिंशच्चतुर्युक्तं दीक्षाकर्मसमाश्रितः ।
महाराज्यप्रलाभाय पुत्रपौत्राभिवृद्धये ८०
गजाश्वपशुवृद्ध्यर्थं द्रव्यलोभविवर्जितः ।
महायुद्धजयार्थं वा नृपतिः कारयेदिदम् ८१
चत्वारिंशत्सहस्रं च चतुःस(ा)हस्रसंयुतम् ।
मासार्धमपि होतव्यमथवाऽष्टदिनं प्रभो ८२
षड्रात्रमयुतं वापि चतुःशतसमन्वितम् ।
अथवाऽपि चतुर्वारमेकवारमथापि वा ८३
चत्वारिंशच्चतुर्युक्तं चतुःशतसमन्वितम् ।
चतुःसहस्रमथवा प्रत्यहं तु चतुःशतम् ८४
मासान्तं होमयेद्विद्वान् ईप्सितं लभते फलम् ।
पृथङ्मोदादिभिर्द्रव्यैः[1] सम्पुटाज्यसमन्वितैः ८५
प्रत्येकमयुतं वाऽपि हुनेदयुतमेव वा ।
चतुःशतसमायुक्तं चतुःसहस्रमेव वा ८६
सर्वरोगविनाशार्थं सर्वकामफलाप्तये ।
अथ वा केवलद्रव्यैरष्टभिर्होमयेद्बुधः ८७
पूर्वोक्तसंख्यया युक्तं सप्तवारं निरन्तरम् ।
चतुर्वारं तु वा प्राहुरन्येऽपीदमनुत्तमम् ८८

---

1 मोदकादिभिर्द्रव्यैः प्रत्येकं जुहुयात् ।

यद्यत्कामं समुद्दिश्य तत्तत्कामं लभेत सः ।
आरोग्यैश्वर्यसिद्धयर्थं धानधान्यसमृद्धये १८९
चत्वारिंशच्चतुर्युक्तं नाळिकेरेण वा तिलैः ।
दश वाष्टाहुतीरेव नित्यं संवत्सरान्तिकम् ९०
आरोग्यं लभते मन्त्री पुत्रं पुत्रविवर्जितः ।
कन्यार्थी कन्यकां कन्या वरं चैव वरार्थिनी ९१
वश्यार्थी च तथा वश्यं जयार्थी च जयं लभेत् ।
तिलैराज्येन संयुक्तैः प्रत्यहं तु समं हुनेत् ९२
चत्वारिंशच्चतुर्युक्तचतुःशतसमन्वितम् ।
वत्सराल्लभते पुत्रं विघ्नेशस्य प्रसादतः ९३
तत्ताद्द्रव्यैरमीभिर्वा[1] तत्तात्कामफलाप्तये ।
पद्मैर्होमेन भूपालं तत्पत्नीरुत्पलैः शुभैः ९४
मन्त्रिणः कुमुदैर्दर्भैं विप्रान् पिप्पलसम्भवैः ।
समिद्भरैर्सुर(नर)पतिमुदुम्बरसमुद्भवैः ९५
प्लक्षैर्वैश्यान् वटोद्भूतैः शूद्रान् मन्त्री वशं नयेत् ।
मधुना स्वर्णलाभः स्याल्लभेद्गावो घृतेन वै ९६
आज्यहोमेन महतीं श्रियमाप्नोति मानवः ।
दध्ना सर्वसमृद्धिः स्यादन्नेनान्नपतिर्भवेत् ९७
वृद्धि [वृष्टि] कामस्तु जुहुयाद्वेतसानां समिद्भरैः ।
कुसुम्भकुसुमं हुत्वा सर्वशान्ति लभेन्नरः ९८
पुत्रजीवैर्लभेत्पुत्रं कन्यां साज्यतिलैरपि ।
वाग्जयं क्षीरहोमेन विद्यां किंशुकपुष्पकैः ९९
असाध्यसाध्यं पालाशैरर्कैरायुष्यवर्धनम् ।
विज्ञानं मल्लिकाभिश्च योगसिद्धिं सिताम्बुजैः २००
तैलेनोच्चाटनं शत्रोः सिद्धार्थो भूतनाशनः ।

---

1 वक्ष्यमाणैर्द्रव्यैर्वा ।

त्रिमधुराक्तदूर्वाभिश्चत्वारिंशच्चतुःशतम् २०१
प्रत्यहं होमयेद्विद्वान् वत्सराल्लभते सुतम् ।
अर्धवर्षात्तथा पुत्रीं त्रिमासाल्लभते धनम् २
आभिचारहरं द्रोणैरपामार्गै रिपोर्जयम् ।
पायसैः सर्वसिद्धिं च लड्डुकाभिः श्रियं सुखम् ३
समिद्धोमेन कुण्डल्यास्त्वपमृत्युविनाशनम् ।
रक्ताक्षतैर्वातनाशं गोधूमैः कफनाशनम् ४
तण्डुलैः पित्थनाशः स्यात् बकुलैर्ज्वरनाशनम् ।
पाण्डुनाशो निशामूलैर्मरीची कामिळापनुत् ५
एतैरयुतमेवापि चतुःशतसमन्वितम् ।
चतुःसहस्रकं वाऽपि चतुःशतमथापि वा ६
मन्त्रविन्मूलमन्त्रेण द्रव्याण्येतानि होमयेत् ।
बीजेनैकेन वैतानि होममन्त्रो द्विधा मतः ७
सम्पुटाज्यान्विते होमे मन्त्रः सम्पुटसंस्मृतः ।
मन्त्रस्य सम्पुटो नास्ति होमे सम्पुटवर्जिते ८
द्रव्यमानाऽऽहुतिः प्रोक्ता द्रव्यं चाहुतिमानकम् ।
होममानं द्विधा प्रोक्तं तयोरेकं समाश्रयेत् ९
धनाढ्ये द्रव्यबाहुल्ये होमबाहुल्यमिष्यते ।
मध्ये तु मध्यमः प्रोक्तः स्वल्पे स्वल्पतरः स्मृतः १०
त्रिवर्णानां द्विजातीनां सकृत्संस्थापितेऽनले ।
कुर्याद्धोमं तु शूद्राणां प्रत्यहं स्थापितेऽनले ११
अवह्न्युद्वासने [ह्यनुद्वास]पक्षे सकृत्ताज्जननक्रिया ।
कुर्यादुद्वासने पक्षे जननं तु दिने दिने १२
महाविघ्नेशहोमस्य होमलोपापनुत्तये ।
शान्त्यर्थं कारयेच्छक्त्या होमं मृत्युञ्जयाभिधाम् १३
महामृत्युञ्जये होमे तत्वहोमं गणेशितुः ।

परस्परहुतं न स्यादुभयोः सिद्धिहेमयोः ? २१४
होमं समाप्य वैघ्नेशं वह्निस्थं प्रार्थयेत्ततः ।
तर्पणं विधिवत्कृत्वा विघ्नमुद्वासयेदथ १५
इति संक्षेपतः प्रोक्तो विघ्नेशहवनक्रमः ।
प्रतिपक्षाचतुर्थीषु चतुर्विंशतिषु क्रमात् १६
शुक्लपक्षाचतुर्थ्यादिष्वष्टद्रव्यैश्चतुःशतम् ।
चत्वारिंशच्चंचतुर्युक्तं हुनेत्तात्संस्कृतेऽनले १७
ईप्सितां लभते सिद्धिं वत्सरान्नात्र संशयः ।
शुक्लपक्षाचतुर्थीषु मन्त्रविद्द्वादशासु वा १८
महाचतुर्थीपूर्वास्ते हुनेत्पूर्वोक्तसंख्यया ।
लभते चिन्तितं कार्यं वत्सरेण न संशयः १९
चतुर्थ्यां तु महत्यां वा प्रतिसंवत्सरं हुनेत् ।
चतुःसहस्र च चतुःशतसंख्यासमन्वितम् २०
पूर्वोक्तैरष्टभिर्द्रव्यैश्चतुःशतमथापि वा ।
अष्टाब्दादीप्सितां सिद्धिं लभते नात्र संशयः २१
विघ्नप्रसादतोऽन्ते च शिवसायुज्यमाप्नुयात् २२

इति वासिष्ठसंहितायां द्वितीयः पटलः

तर्पणस्य विधिं वक्ष्ये संक्षेपेण द्विजोत्तम ।
विघ्नप्रीतिकरं नित्यं सर्वविघ्नविनाशनम् १
आयुस्तेजोबलकरं वाञ्छितार्थप्रदायकम् ।
स्नानान्तेऽप्यग्निकार्यान्ते नद्यां वाऽपि सरोवरे २
तटाके कूपदेशे वा पात्रे तोयप्रपूरिते ।
सौवर्णं राजतं पात्रं ताम्रजं वा मृदुद्भवम् ३
त्रिकोणं चतुरस्रं वा वर्तुळं चार्धचन्द्रकम् ।
दक्षां द्विद्रोणकं धर्तुं एकद्रोणजलं तु वा ४
स्थण्डिले म[य]न्त्रमालिख्य गाणपत्यं पुरोक्तवत् ।

भावयित्वा जले यन्त्रं नद्यादिकृततर्पणे ५
विनियोगे कृते होमे तर्पणं कुण्डसन्निधौ ।
अन्यत्र तर्पणं कुर्यान्नद्यादिषु विशेषतः ६
होमकार्येषु होमान्ते स्नानान्ते वाऽन्यकर्मणि ।
पूजान्ते वा जपान्ते वा तर्पणं कुण्डसन्निधौ ७
रक्तचन्दनगन्धोदांस्तण्डुलान् यन्त्रमध्यमे ।
न्यस्य कूर्चन्तु तन्मध्ये मूलमन्त्रेण मन्त्रवित् ८
प्राणायामादिकं कृत्वा न्यासं कृत्वाऽथ पूर्ववत् ।
क्षाळितं धूपितं रक्तक्षौमसूत्रेण वेष्टितम् ९
पात्रं संसाद्य तन्मध्ये मूलमन्त्रेण मन्त्रवित् ।
उत्तानीकृत्य तत्पात्रं नाळिकेरजलैः शुभैः १०
सिताज्यमधुसंमिश्रैरक्त(रष्ट)गन्धसमन्वितैः ।
पूरयित्वा महानद्यास्तटाकादिजलैरपि ११
हिरण्यं माणिकं रत्नं कूर्चान् दूर्वाक्षतान् क्षिपेत् ।
अष्टमुष्टिमितं चाष्टद्रव्यं तत्र विनिक्षिपेत् १२
अमृतेन जलं स्पृष्ट्वा जपेदष्टोत्तरं शतम् ।
ध्यात्वा सुधामयं तोयं तन्मध्ये यन्त्रमण्डलम्(मन्त्रमुत्तमम्) ॥
ध्यात्वा मध्ये गणाध्यक्षं ध्यात्वाऽऽवरणसंयुतम् ।
गन्धपुष्पैः समभ्यर्च्य धूपदीपनिवेद्यकैः १४
ध्यायेद्विघ्नेश्वरं भक्त्या तर्पयेद्विधिवत्क्रमात् १५
मूलाधारविनिःसृताद्गणपतेस्तत्पुष्करद्वारतो
मूर्धान्तं प्रतिभिद्य मूलमधिगम्याधारशक्तिं स्वकम् ।
तद्वत्स्वस्य च तस्य वाममुषिरेणान्योन्यसम्मेळना-
त्सम्प्राप्तामृतधारयाऽऽप्लुततनुं सञ्चयेत्साधकः १६
आदौ गणेशबीजेन[1] चतुर्वारं प्रतर्पयेत् ।

---

1 गमिति बीजेनादौ मध्ये मध्ये अन्ते च बीजेन तर्पणम् ।

अष्टाविंशत्यक्षराणि प्रत्येकं तु चतुश्चतुः १७
प्रत्येकं विघ्नबीजेन तत्तन्मध्ये चतुश्चतुः ।
चतुर्दशपदं तद्वत्ताद्वत्पञ्च रमादिकान् १८
सप्रियांश्च पुनस्तद्वदामोदाद्यांश्च षण्मनून ।
सशक्तींस्तर्पयेत्तद्वत् द्वौ निधी शक्तिसंयुतौ १९
चतुर्वारं तु मूलेन तर्पयेदवसानकैः ।
एवं कृते चतुर्युक्तं चत्वारिंशच्चतुःशतम् २०
प्रत्यहं तर्पणं प्रोक्तं मण्डलादिष्टसिद्धिदम् ।
(अथवा तर्पणं कुर्यान्मूलमन्त्रेण मन्त्रवित् २१
चतुर्गणं चतुःपूर्वं चत्वारिंशच्चतुःशतम् ।)
प्रत्येकमादौ मूलेन[1] चतुर्वारं प्रतर्पयेत् २२
अष्टाविंशत्यक्षराणि चतुर्दशपदानि च ।
श्रीशक्तिरतिभूपुष्टीः स्वबीजाद्याः प्रियान्विताः २३
आमोदादीन्स्वबीजाद्यान् शक्तियुक्तांश्च तर्पयेत् ।
चतुश्चतुः पुनर्मन्त्री शङ्खपद्मनिधी ततः २४
हा? [ना?]मादिबीजसहितौ तर्पयेत्स्वप्रियान्वितौ ।
तर्पणेनामुना स्वीयमिष्टं प्राप्नोति मण्डलात् २५
अन्यत्प्रकारं वक्ष्यामि तर्पणं कैश्चिदीरितम् ।
एकादशपदं पूर्वं बीजपूरादिकान् दश २६
विघ्नादीनष्ट....[विघ्ना]दीन् दशामोदादिकान् षट् ।
सिद्ध्याद्याः षट् क्रमाच्छक्तीः प्रियायुक्तां निधिद्वयम् २७
पृथक्पृथक् चतुर्वारं मूलेनैव तदन्तरा ।
पृथक्पृथक् चतुर्वारं चतुर्वारं तदन्तिके २८

---

1 द्वितीयतर्पणे बीजस्थाने मूलमिति विशेषः आहत्य
1+28+28+14+14+5+5+6+6+2+2—111×4
444 तर्पणानि भवन्ति ।

एवं त्रिषट् संख्ययुतं तर्पणं स्याच्चतुःशतम् ।
अपरं तर्पणं वक्ष्ये क्वचिदागमकीर्तितम् २९
पदान्यष्टौ दश हेतिः पञ्च माद्यान्वसून्मितान् ।
आमोदादीन् सशक्तींश्चाप्यङ्गषट्कं च मातृकाः ३०
दिगीशांश्च दशेन्द्रादीन् तर्पयेच्च पृथक्पृथक् ।
चतुर्वारं चतुर्वारं तत्तान्मध्ये चतुश्चतुः ३१
मूलेन सर्वमन्त्रान्ते चतुर्वारं तु मूलतः ।
एवं कृते चतुःपूर्वं चत्वारिंशच्चतुःशतम् ३२
तर्पणं तु भवेत्क्षिप्रमिष्टसिद्धिप्रदायकम् ।
अथवा[1] तर्पणं कुर्यान्मूलमन्त्रेण मन्त्रवित् ३३
चतुर्गुणं चतुःपूर्वं चत्वारिंशच्चतुःशतम् ।
अनेन तर्पणेनेष्टसिद्धिं विन्दति मण्डलात् ३४
क्षीरेण सर्वशान्त्यर्थं मण्डलान्तं प्रतर्पयेत् ।
पूर्वोक्तसंख्यया युक्तं मन्त्रवित्प्रतिवासरम् ३५
आज्येनायुर्वृद्धिकरं दध्ना चैव सदा शुभम् ।
शत्रोरुच्चाटनं तक्रान्मधुनाऽऽमयनाशनम् ३६
गन्धेन (गुडेन) राज्यलाभः स्यात् नाळिकेरजलैः श्रियम् ।
कन्यालाभं तु तैलेन वाग्जयं कुशवारिणा ३७
प्रियङ्गुपक्वतोयेन पुत्रलाभोऽर्थसङ्ग्रहः ।
क्षीरेण नाळिकेराणां महायुद्धजयं भवेत् ३८
वश्यं रसाळतोयेन कान्तिः स्यादिन्दुवारिणा ।
गन्धतोयेन विद्यां च[ा]भयं? रक्तस्य[2] वारिणा ३९
एवं संक्षेपतः प्रोक्तस्तर्पणस्य विधिः क्रमात् ।
आदौ प्रणवमुच्चार्य बीजाद्यं बीजषट्ककम् ४०

1 अथवा मूलेनैव चतुश्चत्वारिंशदुत्तरचतुःशतवारं तर्पणम् ।
2 रक्तचन्दनेनाभयम् । अथवा रक्तेन भयमिति ।

प्रत्येकं विघ्नबीजान्तं तर्पयामि पदं ततः ।
षड्बीजोर्ध्वस्थितान् वर्णान् अं? [स] बिन्द्वतान्द्विठान्तिकान् ॥
यथावत्पदमुच्चार्य विघ्नान्तं तारपूर्वकम् ।
तर्पयामि ततः शब्दमित्युक्त्वा तर्पयेत्पदम् ४२
प्रणवं स्वस्य बीजानि प्रोच्चार्य स्वस्वनाम ऽम् ।
कर्मान्तं च रमादीनां ? तर्पयामि पदान्तिकम् ४३
मन्त्रोद्धार इति प्रोक्तः विघ्नतर्पणकर्मणि ।
आदाय तोयमञ्जल्या स्मरन् तं विघ्ननायकम् ४४
क्षिप्रं नासान्तमुद्धृत्य दद्याद्विघ्नमुखाम्बुजे ।
तर्पणं मस्तके तस्य दद्यादित्यपरे जगुः ४५
अपरे कण्ठदेशे च हस्तदेशे तथाऽपरे ।
ध्यायंस्तोयगयन्त्रमध्यनिलयं पाशाङ्कुशौ बिभ्रतं
दन्ताकल्पलतास्वदोर्भिररुणं पञ्चावृतीसंवृतम् ।
शुण्डाग्रं विनिधाय साध्यशिखरे तन्मुक्तधारासुधां
सिञ्चन्तं गणनायकं मुहुरहं प्रत्यम्बुना तर्पयेत् [ये] ४६
तर्पणं शुद्धतोयेन मन्त्रसिद्धौ प्रकीर्तितम् ।
परेषां विनियोगे तु तत्तद्द्रव्यैः प्रतर्पयेत् ४७

इति वासिष्ठसंहितायां तृतीयः पटलः

अथ संक्षेपतो वक्ष्ये प्रयोगे जपलक्षणम् ।
स्नातः शुक्लाम्बरः शुद्धरक्तवस्त्रोत्तारीयकः १
प्राङ्मुखोऽथ कुशासीनः कुशहस्तो जितेन्द्रियः ।
प्राणायामादिकं कृत्वा पूर्वोक्तन्यासमाचरेत् २
ध्यायेद्विघ्नेश्वरं भक्त्या जपेद्धोमाच्चतुर्गुणम् ।
होमाहुतिसमं वाऽपि तद्दशांशमथापि वा ३
प्रवाळैर्बन्धुरैः शुद्धैर्मूलमन्त्रेण मन्त्रवित् ।
गणानामिति मन्त्रेण जपेद्वाऽपि दशांशकम् ४

बीजेनैकेन वा मन्त्री जपेद्धोमदशांशकम् ।
चतुर्गुणं जपेद्विद्वानित्युक्तं जपलक्षणम् ५
तद्वत्कुर्यान्नमस्कारं सकलीकृतविग्रहः ।
विघ्नेशं तत्र नाम्ना वा दण्डाख्यं च पुनः पुनः ६
सपत्नीकं च कर्तारं स्नापयेत्कलशोदकैः ।
सर्वपापविशुध्यर्थं गणानां त्वेति मन्त्रतः ७
सुरास्त्वामिति मन्त्रेण गणसूक्तेन वा गुरुः ।
पूजानैवेद्यमुद्वास्य शेषं कुम्भोदराय च ८
करशुध्यादिकं दत्वा धूपदीपौ तथैव च ।
नीराजनादिकं कृत्वा नृत्तगीतादि कारयेत् ९
शतनामादिभिः स्तोत्रैः पुराणागमदर्शितैः ।
स्तवराजेन मुख्येन गणाष्टकमुखैरपि १०
प्रार्थयित्वा ततो देवमुद्वहेद्धृदयाम्बुजे ।
अङ्गन्यासादिकं कृत्वा सर्वं ब्रह्मण्यथार्च[र्प]येत् ११
ऋत्विग्भ्यः प्रतिमां दद्याद्रक्तवस्त्रयुगान्विताम् ।
सदक्षिणां तत्तादुक्तैर्मूलमन्त्रैस्तुगा[स्तवा]न्वितैः १२
गुरवे दक्षिणां दद्यात्पुंगजं समलङ्कृतम् ।
पुंरक्तवाजिनं वाऽपि सर्वालङ्कारसंयुतम् १३
यद्वालङ्कारसंयुक्ताः सवत्सा लक्षणान्विताः ।
गावो दद्याद्रक्तवर्णा द्वादशापि तदर्धगाः १४
त्रिगावोऽथ द्विगावौ वा धेनुमेकामजं तु वा ।
गजादीनामलाभेऽत्र स्वर्णेन रजतेन वा १५
तत्तत्प्रतिकृतिं कृत्वा यथाशक्त्या प्रदापयेत् ।
निष्कैकं तु शते होमे निष्कार्धं तु तदर्धके १६
गुरवे दापयेत्कर्ता तद्धोमफलवृद्धये ।
तत्तादर्धं तदर्धं वा ऋत्विग्भ्यः प्रतिदापयेत् १७

अन्येभ्योऽपि यथा शक्त्या सर्वेभ्यो दक्षिणा अपि ।
कन्यादानं च भूदानं तिलाज्यं दानमुत्तमम् १८
यथा शक्त्या प्रदातव्यं तत्तत्कर्मफलाप्तये ।
सहस्रं वाऽयुतं वाऽपि शतं वाऽथ द्विजोत्तमान् १९
भोजयेद्भक्ष्यभोज्याद्यैः प्रत्यहं विघ्नतुष्टये ।
विप्राशिषं गृहीत्वाऽथ स्वयं भुञ्जीत वाग्यतः २०
एवं यः कुरुते भक्त्या त्रिवारं सकृदेव वा ।
महाचतुर्थिकाद्यन्तमन्यस्मिन् सङ्कटेऽपि वा २१
इह भुक्त्वेष्टकाम्यार्थानन्ते विघ्नत्वमाप्नुयात् ।
इति संक्षेपतः प्रोक्तो गणेशस्य महात्मनः २२
होमपूजादिकस्तत्र गीयतेऽन्यत्र विस्तरात् २३

इति वासिष्ठसंहितायां चतुर्थः पटलः

अष्टोत्तरशतं नाम्नां वक्ष्ये वैनायकं परम् ।
सर्वलोकहितार्थाय सर्वकामार्थसिद्धये १
विनायको विरूपाक्षो विशोको विगतज्वरः ।
विश्वनाथो विरागात्मा विद्यावान्विजयी विभुः २
गण्डी गणेशो गगनो गजास्यो गिरिजात्मजः ।
गभस्ती गगनो गन्धी गम्भीरो गहनो गणः ३
लम्बोदरो ललाटाक्षो ललितो लोकवन्दितः ।
लोकपालो लोहिताङ्गो लोकवन्द्यः कलाधरः ४
शूरसेनः शूर्पकर्णः शूरः शूरपराक्रमः ।
सुरेशः शूल[सुर]नाथश्च शूली शूलधरात्मजः ५
सुभगः सुप्रभः सुभ्रूः सुरेशोऽसुरनाशकः ।
सुन्दरः सुरपाः ? सौम्यभूषणश्चन्द्रशेखरः ६
हेरम्बः शङ्करः शम्भुः शान्तः शान्तिकरः परः ।
वेदान्तवेद्यो वेदात्मा वेदविद्वेदशासनः ७

परमेशः परानन्दः परात्परतरः कविः ।
स्थूलस्कन्धः स्कन्धशूलः स्कन्दः स्कन्दाग्रजो वरः ८
कुण्डली मेखली माली शक्तिः शक्तिधर[:] प्रियः ।
गदीक्षुधन्वा चक्री च पवित्री पापनाशनः ९
सर्पसूत्री बृहत्कुक्षी मातुळङ्गी ? [ङ्ग] फलप्रियः ।
ह्रस्वपाद् ह्रस्वदोर्दण्डः ह्रस्वमूर्तिरनामयः १०
जगत्स्रष्टा जगत्पालो जगन्नाथो जगन्मुखः ।
जगत्साक्षी महायोगी सर्वदेवनमस्कृतः ११
विघ्नो विघ्नहरो वाग्मी विघ्नकृज्जगदादिजः ।
निर्गुणो निष्कळो नित्यो निराधारो निरञ्जनः १२
निर्ममो भूतिदो भूतिर्भूतेशो भूतिनाशनः ।
हृत्पद्मगो महातेजाः सर्वज्ञः पुष्टिवर्धनः १३
एवमष्टोत्तरशतं विघ्ननाम प्रकीर्तिनम् ।
त्रिसन्ध्यं यः पठेन्नित्यमेतद्विघ्नविनाशनम् १४
सर्वान् कामानवाप्नोति वत्सरान्नात्र संशयः ।
विघ्नलोकं समासाद्य रुद्रलोकं स गच्छति १५
विघ्नान्धकाररवये कवयेऽजराय
रक्ताय रक्तवसनाय च ई(महे)श्वराय ।
विघ्नाय विघ्नहरणाय सुरारिहन्त्रे
तस्मै नमो भगवते करुणाकराय १६
वागीश्वराय वरदाय गणेश्वराय
रुद्राय रुद्रतनयाय महोदराय ।
शान्ताय कुम्भिवदनाय धनुर्धराय तस्मै .... करुणाकराय १७
गौरीसुताय भवसिन्धुमहानघाय
पापौघशैलकुलिशाय गदाधराय ।
ब्रह्मादिवन्दितपदाय गणेश्वराय तस्मै .... करुणाकराय १८

वागीश्वराय वनगाय गुहाग्रजाय
गुह्याय भूतपतये भुवनैककर्त्रे ।
सर्वेश्वराय सकलाय सनातनाय तस्मै .... १९
कालाय कालहरणाय कलाधराय
कालात्मने सकललोकविले[लो]पनाय ।
चन्द्रार्कवह्निनयनाय चिदात्मकाय तस्मै .... २०
बालेन्दुशेखरधराय महाबलाय
योगाय योगिनमिताय भवोद्भवाय ।
बालार्ककोटिकिरणाय जगद्विधात्रे तस्मै .... २१
स्वर्णाब्जमध्यगतवह्निपुरस्थिताय
भूतात्मने दशभुजाय विनायकाय ।
श्वेताखुपृष्ठगमनाय महामहिम्ने तस्मै .... २२
आनन्दचिन्मयसते जगदेककर्त्रे
सिद्ध्यष्टकेड्यचरणाय समस्तशास्त्रे ।
भक्तप्रियाय परमाय गुहाश्रिताय तस्मै .... २३
दन्ताग्रचूर्णितमहाकुलपर्वताय
भीष्माय भीषणरसाय महाननाय ।
कैलासमेरुयुगळीकबळीकृताय तस्मै .... २४
ज्ञानात्मकाय जननान्त्रविवर्जिताय
विश्वाक्षिहस्तमुखकर्णपदाम्बुजाय ।
सूक्ष्माय सूक्ष्मनयनाय महाविराजे तस्मै .... २५
पाताळमूलचरणाय कक ....[दृग]णाय
व्योमाग्रकेशशिखराय परावराय ।
वीराय वीरपतये बहुरूपधात्रे तस्मै .... २६
सामाभिगाननिरताय निरञ्जनाय
नित्याय शुद्धमतये गुणवर्जिताय ।



कात्यायिनीप्रियकराय गुणात्मकाय
तस्मै नमो भगवते करुणाकराय २७
एतद्गणेशदशकं पठते मनीषी
द्वाभ्यां युतं हुतविधौ परिशुद्धचित्तः ।
भुक्त्वाऽखिलेप्सितफलानि शुभानि सम्यक्
देहान्तिके गणपतेर्भवनं प्रयाति २८
हृदाभासभक्तानुकम्पिन्नशेषप्रदीपस्वरूप प्रभो नित्य... [रूप]
चिदाभास कानन्दसंवित्स्वरूप प्रसन्नेभवक्त्र प्रसीद प्रसीद २९
चतुर्थ्यां समुद्भूत देह्यन्तरात्मन् चतुर्वेदमृग्याऽखिलात्मन्निभेश ।
प्रपञ्चप्रवृत्तिप्रभो देशनाथ प्रसन्नेभवक्त्र .... ३०
लसच्चन्द्रमौले त्रिणेत्रैकदंष्ट्र प्रसूनातिरि[र]क्तप्रसूनाम्बराढ्य ।
महात्मन्महेशप्रमोदप्रमाद्य प्रसन्ने .... ३१
त्रिषट्काश्रिसम्मिश्रितेऽब्जे च रक्ते
सदा सन्निविष्ट प्रभूतार्तिहन्तः ।
चलत्पादकर्णप्रवृत्तोदराढ्य प्रसन्ने .... ३२
कराब्जद्विषट्कप्रभान्त[ः]प्रबुद्धे प्रहेतिप्रनष्टप्रसिद्धासुरौघ ।
स्फुरद्रत्नसौवर्णघण्टात्तकण्ठ प्रसन्ने .... ३३
परात्मन्नुमारूप या वा स तस्याः ?
परस्तन्यपानप्रवृद्धातिकाय ।
पवित्राहिहारोज्वलद्दिव्यदेह प्रसन्ने .... ३४
दिशानाथकोटिप्रभाभासमाने निशानाथबिम्बोपमास्याभिरामे ।
लसत्कङ्कणोद्यत्कराब्जेऽमले मां सदा पाहि विघ्नेश विश्वप्रदीप ॥
अमेयेऽमले नित्यसंवित्स्वरूपे गुणातीतविद्युत्प्रभाभासमाने ।
दयाशीलदिव्यस्वरूपे शिवात्मन् शिवे चैकरूपे नमस्ये भवन्तौ ॥
चिदानन्द चिन्मात्र चैतन्यभूत प्रभाशेषलोकेशमूर्तिस्वरूप ।
गुरोराज्ञया गम्यमूर्तिस्वरूप प्रभो देशिकेन्द्राङ्घ्रिभक्त्या प्रसीद॥







विशुद्धं परं ब्रह्म यद्वेदसारं प्रधानस्वरूपं भवध्वंसि नित्यम् ।
मनोवागतीतं शिवं नित्यबोधं महार्थं तदस्मै नमस्ते नमस्ते ॥
इति स्तुत्वा वरं देवं देवीं च वरदामपि ।
पूजान्ते च स्तुतिश्चेयं कर्तव्या च विपश्चिता ३९
अष्टद्रव्यमनारतार्पितमलंखादन् पुरा स्रविणी-
निर्यत्फेनपरिस्रुतास्यकमला (वला) वलगत्कराम्भोरुहः ।
चञ्चच्चञ्चरिकाञ्चितोरुकरभः सन्ताडनात्कर्णयो-
र्द्धर्यातव्यो निजवल्लभां मृगदृशीं चाधीक्षमाणोऽक्षिभिः ४०

इति वासिष्ठसंहितायां पञ्चमः पटलः

## अन्यत्रोक्ततर्पणविधिः

वेदवारं तर्पयित्वा नेत्रतर्पणमाचरेत् ।
दक्षादृक्तर्पणे नेत्रसिद्धिः सम्पद्यते सदा १
वामदृक्तर्पणेन स्यादुत्पन्नेष्टविवर्धनम् ।
सुषुम्नातर्पणादुक्तं पुरुषार्थचतुष्टयम् २
चत्वारि लक्ष्मीपर्यन्तैर्नमोन्तैर्मन्त्रकैः क्रमात् ।
एकैकवारं सन्तर्प्य देवं सम्पूजयेत्पुनः ३
ततः पुरस्तात्सौवर्णं कटाहं परिकल्पयेत् ।
तं कटाहं त्रिमध्वाक्तैरष्टद्रव्यैः प्रपूरयेत् ४
गुर्वादिपीठपर्यन्तं द्वितीयान्तं प्रतर्पयेत् ।
मूलमन्त्रेण दशधा विभज्याथ प्रतर्पयेत् ५
तारादिबीजषड्भिश्च षड्भागानि विदुर्बुधाः ।
त्रिभागपञ्चपञ्चार्णैः सप्तवर्णैश्चतुर्थकम् ६
एकादशांशे षड्भागं पूर्ववत्परिकल्पयेत् ।
वेदांशं पञ्चपञ्चार्णैर्द्वाभ्यामंशं तु पञ्चमम् ७
नवभागे तु षड्भागं षड्बीजैः प्रणवादिभिः ।
पञ्चपञ्चार्कसंख्यार्णैर्गुणांशं परिकल्पयेत् ८

षड्भागं तारपूर्वेण षड्बीजेन प्रकल्पयेत् ।
दश द्वादशवर्णैश्च द्वयंशभागो[गा]ष्टकं बुधैः ९
तारादिषड्बीजयुतं रसांशं पूर्वांशहीनं मनुसंख्यभागे ।
पञ्चाक्षिवह्न्यब्धिविधुद्विसन्ध्याद्वयर्णैर्विशिष्टैरुदितं मदांशम् ॥
स्वपुष्करं भ्रामयन्तं तदा तं भावयेत्प्रभुम् ।
तत्पुष्करस्य मूले च क्रममाणस्य तर्पणम् ११
देवीकरोद्धृतं मूर्ध्नि साधकस्य समर्पितम् ।
पुष्करं मन्यमानः सन् तर्पयीत विचक्षणः १२
मूलाधारविनिसृतेति पूर्वोक्तं सुसमाहितः ।
भावयित्वैवमन्योन्यमैक्येन सुसमाहितः १३
द्विठान्ते तर्पयामीति मूलेन मनुना पुनः ।
चत्वारिंशच्चतुर्वारं तर्पयेन्मन्त्रवित्तमः १४
देवीमन्त्रेण च तथा मनुसंख्यं प्रतर्पयेत् ।
एवं कृते तर्पणे तु परिवाराण्यनुक्रमात् १५
तर्पयामीति मन्त्रैः स्वैस्तर्पयेच्च सकृत्सकृत् ।
पुनर्मूलेन चत्वारि तर्पयेन्मूलदेवताम् १६
कर्मान्ते दशविघ्नानां वरदान्ते मनूत्तमैः ।
महालक्ष्मीं द्वितीयान्तां तर्पयेत्सावधानकम् १७
अपूपामो[पमो]दकावाद्यौ [द्यो] द्वितीयं नवनीतकम् ।
सितक्षीरं तृतीयन्तु चतुर्थं मधुसक्तवः १८
एतैः पृथक् पृथक् द्रव्यैस्तर्पयेच्च विचक्षणः ।
तदन्ते मूलमन्त्रेण युगवारं प्रतर्पयेत् १९
द्रव्यशेषं समस्तं च तस्मिन्नेव नियोजयेत् ।
समयोगं समदिनं तत्समर्पणमेव च २०
जपं च वन्दनं तद्वत्कल्पयेद्विधिसिद्धये २१
आदायाञ्जलिपूरितं वसुमितं द्रव्यं गजेन्द्रास्यवन्

मुक्तास्यं [ङ्गं] गणनायकं प्रति हुतं ध्यात्वाऽग्निमध्यस्थितम् ।
मूलेनास्य मुखाम्बुजोपरि हुनेद्द्रव्याष्टकं भक्तितो
यद्वाऽर्धाञ्जलिपूरितं कबळकं तन्नाळिकेरोपमम् २२
विघ्नयन्त्रं द्विधा प्रोक्तं प्रमाणं कोष्ठमित्युभे ।
कोष्ठं यन्त्रं तन्त्रमुख्यं प्रमाणमितरे जगुः २३
तन्मध्ये नृपपङ्क्तिसंयुतपदान्याकल्प्य तन्मध्यमे
गर्भीकृत्य चतुष्पदं कुवलयं त्र्यस्राङ्गकोणोदरम् ।
गर्भीकृत्य पदद्वयं बहिरथो वृत्तं तदन्तर्दळं
नागं वृत्तयुगं बहिः पदयुगेनोर्वीपुरं युग्मतः २४
षट्कोणं तु दशाङ्गुलं परिलिखेत् त्र्यस्रं तु तन्मध्यमे
पूर्वाग्रं दहनाङ्गुलं तु(कु)वलयं षट्कोणशृङ्गं स्पृशत् ।
वृत्तं त्र्यङ्गुलबाह्यतस्तदपरं चन्द्राङ्गुलाद्वर्तुळं
बाह्यैकाङ्गुलतोऽन्यवृत्तमवनेर्गेहं बहिर्द्व्यङ्गुलात् २५
आद्या मूर्तिभिरावृतिस्तदपरा तुण्डै रमाद्यैः परा-
ऽऽमोदाद्यैर्हृदयादिभिस्तदपरा विघ्नेश्वराद्यैः स्मृता ।
विघ्नाद्यैरणिमादिसिद्धि(भिस्त)र(द)परा ब्राह्म्यादिभिर्भैरवै-
रिन्द्राद्यैः कुलिशादिभिर्हरिपतेरित्यर्कसंख्याऽऽवृतिः २६
अष्टाविंशत्यक्षराणां तारादीनां यथाक्रमम् ।
तत्तद्ध्यानं प्रवक्ष्यामि सद्यो मन्त्रप्रसिद्धये २७
ध्यानमात्रेण सन्तुष्टा देवतावर्णसंयुताः ।
सर्वसिद्धिं प्रयच्छन्ति तस्मात् ध्यानं विशिष्यते २८
ओङ्कारमूर्तिं भुवनैकनाथां कुन्देन्दुवर्णां पुरुषां पुराणाम् ।
चतुर्भुजां पिङ्गजटाकलापां त्रिलोचनां वेदमुखां नमामि २९
श्रीङ्कारमूर्तिं कनकावभासां पद्मद्वयाभीतिवरं [रान्] दधानाम् ।
पीताम्बरां सर्वविभूषणाङ्गीं त्रिलोचनां भूतिकरां नमामि ३०
ह्रीङ्कारमूर्तिं क(त)रुणार्कवर्णां पाशाङ्कुशाभीतिवरात्तहस्ताम् ।

त्रिलोचनां चन्द्रकरावतंसां नमामि शक्तिं जगदेकशक्तिम् ३१
क्लीङ्कारमूर्तिं मदनां द्विनेत्रां बालार्कवर्णां भुवनैकरूपाम् ।
चापेक्षुपुष्पेषुयुगं दधानां नमामि भक्त्या जगदिष्टसिद्धिम् ॥
ग्लौंकारमूर्तिं धरणीं द्विनेत्रां व्रीह्यग्रकीराभयदेष्टहस्ताम् ।
पद्मासनस्थां जगदेकधात्रीं नमामि देवीमरुणाब्जवर्णाम् ३३
गंकारमूर्तिं गजवक्त्रमाद्यां त्रिलोचनां चन्द्रकलावतंसाम् ।
पाशाङ्कुशौ मोदकटङ्कहस्तां नमामि बीजादिविधारयन्तीम् ॥
ध्यायेत्सदा वाञ्छितमिष्टसिद्धिं गकारमूर्तिं ज्वलनप्रकाशाम् ।
द्विलोचनामम्बुजयुग्महस्तां सदाऽमरस्तोमनताङ्घ्रियुग्माम् ३५
नतेष्टदात्रीमजितां नमामि णकारमूर्तिं स्फटिकप्रकाशाम् ।
द्विलोचनां सर्वविभूषणाङ्गीं वराभयोद्यत्करपद्मयुग्माम् ३६
नमामि यक्षौघनताङ्घ्रिपद्मां पकारमूर्तिं कनकप्रकाशाम् ।
गणार्चिताङ्घ्रिमं[ङ्घ्रि ह्य]मरादिदेवां पाशाङ्कुशौ द्वौ दधतीं
कराभ्याम् ३७
नमामि सर्वाभरणां द्विनेत्रां तकारमूर्तिं दरशुभ्रवर्णाम् ।
शूलं कपालं दधतीं भुजाभ्यामब्जासनामिष्टकरां नमामि ३८
येकारमूर्तिं शरदिन्दुभासां महाकपर्दोज्वलचन्द्रलेखाम् ।
दरारिहस्तामरुणाक्षियुग्मां सिंहासनस्थां वरदां नमामि ३९
वकारमूर्तिं गजदन्तवर्णां आषाढकुण्डीधृतियुग्महस्ताम् ।
समस्तलोकाभयदामनिन्द्यां नमामि रक्ताम्बुजमध्यसंस्थाम् ४०
रकामूर्तिं रविदिक्प्रभासां शक्तीष्टहस्तामलामनिन्द्याम् ।
अनर्घ्यकोटिरमणिप्रकाशां नमामि शत्रूद्भवभीतिनाशाम् ४१
वकारमूर्तिं सितपद्मवर्णां वराभयाढ्यां सुभगां द्विनेत्राम् ।
मन्दस्मितास्यामरविन्दनेत्रां भद्रासनस्थां शुभदां नमामि ४२
रकारमूर्तिं भवपाशनाशां धर्त्रीं कराभ्यामिषुचापदण्डान् [ण्डौ]।
समस्तदेवैरभिनन्दनीयां ज्ञानप्रदां नित्यमहं नमामि ४३

दकारमूर्तिं शुकतुण्डवर्णां सचर्मखड्गं करपल्लवाभ्याम् ।
धात्रीं द्विनेत्राममितौजसाभ्यां नमामि नानाभरणप्रदीप्ताम् ४४
सकारमूर्तिं तरुणार्कवर्णां मनोहरां कल्पयुतामभीष्टाम् ।
धृतामनौपम्यविभूषणाढ्यां नमामि बालेन्दुधरामुदग्राम् ४५
वंकारमूर्तिं शुकतुण्डवर्णां शक्तिं कराभ्यां दधतीं मुदाढ्याम् ।
सोमार्धमौलिं नतलोकरक्षां नमामि नित्यं परमप्रकाशाम् ४६
जकारमूर्तिं जननान्वहीनां जटाभिरामां मणिकुण्डलाढ्याम् ।
टङ्काक्षमाले दधतीं कराभ्यां नमामि रामामरुणां द्विनेत्राम् ॥
नङ्कारमूर्तिं रजतप्रभासां द्विलोचनां चारुविभूषणाढ्याम् ।
कराळवक्त्रामरुणाब्जहस्तां नमामि भास्वन्मकुटोज्वलाङ्गाम् ॥
मेकामूर्तिं बहुमित्रवर्णां दण्डं च पाशं दधतीं भुजाभ्याम् ।
आलोलहारामरुणाब्जसंस्थां क्षेमंकरीं वश्यकरीं नमामि ४९
वकारमूर्तिं पि[शु]कतुण्डवर्णां गजाननामिन्दुकलावतंसाम् ।
मन्दारमाले दधतीं भुजाभ्यां द्विलोचनां चन्द्रनिभास्यलक्ष्मीम् ॥
शकारमूर्तिं शरदिन्दुभासां शठोक[शशाङ्क]लेखासृणिपाशहस्तां
केयूरहारादिविभूषिताङ्गीं नमामि सर्वेष्टकरां त्रिणेत्राम् ५१
माकारमूर्तिं मदविह्वलाङ्गीं मनोहरामिन्दुतुषारवर्णाम ।
दण्डौ महोग्रौ दधतीं कराभ्यां द्विलोचनां भीमतनुं नमामि ५२
नकारमूर्तिं नगराजवर्णां नागेन्द्रहारां दरचक्रहस्ताम ।
आनन्दरूपां विलसद्द्विनेत्रां सर्वप्रतिष्ठाममलां नमामि ५३
यकारमूर्तिं यजनस्वरूपां काळाभ्रवर्णामरविन्दनेत्राम ।
कृपाणहस्तां भजदिष्टदात्रीं नमामि भूषोज्वलदेहकान्तिम ५४
स्वाकारमूर्तिं कनकावभासां देवारिहन्त्रीं च गदारिहस्ताम ।
नमामि सर्वामरवन्द्यपादां द्विलोचनामम्बुजमध्यसंस्थाम ५५
हाकारमूर्तिं हरिदभ्रवर्णां स्रुचं च शक्तिं दधतीं कराभ्याम् ।
विघ्नेश्वरां विघ्नकरीं शरण्यां नमामि सर्वारिहरां द्विनेत्राम ॥

चतुःशतहुते विद्वान् चतुःशत[चत्वारिंशत्]चतुर्युते ।
भक्त्या समर्चयेद्विघ्नं वेदावरणसंयुतम् ५७
पञ्चावरणसंयुक्तं चतुःसहस्रहोमके ।
तदूर्ध्वं द्वादशावृत्त्या चतुर्लक्षं तु होमयेत् ५८
इष्टसिद्धिर्भवेत्तस्मान्निष्फलं तद्विपर्यये ५९
विंशद्वारं तर्पयित्वैव मन्त्री
मन्त्रैर्वर्णैर्वेदवारं द्विठान्तम् ।
मध्ये मध्ये मूलमन्त्रस्य वर्णान्
विघ्नैर्निध्योः षड्गजाः संयुताः स्युः ६०

इति वासिष्ठसंहितायां षष्ठः पटलः

शुभमस्तु

शुद्धिपत्रम्

3 १ स्मरे, स्रे 7 ८–९–१० मात्रकया, मातृकया 8 २२ अः अं नमः, अः नमः अं नमः 11 १४ वराः, वर : १८ न्यासां, न्या ं 16 १ विदाशनं विनाशनं २० द्वादशः, द् दशः 17 २७ श्रीं, श्रां 19 ५ समुदी, सवीमु १८ मूर्तिवि, मर्तिवि 22 २५ अनन्तासनाय, अनन्ताय २७ काम ... नाशिन्यै, काव ... नार्ि न्यै 27 १८ प्रोच्च, प्रो 39 १३ विंप्रान्, विप्रान् 40 २२ [ह्न्यतु, [ह्यनु, 42 २४ सङ्कल्पये, सङ्कुये 43 १० चतुर्गुणं चतुर्गणं । २५ 2=111, 2--111 54 २२ कोटीर, कोट र ।

टिप्पणी– 9 १५ एवं दशाङ्गन्यासेषु शेषेण सर्वत्र व्यापनं कुर्यात् । 14 २३ अष्टावृतिन्यासे – ओं श्रीं गणपतये ... स्वाहा नमः शिरसि, ओं ह्रीं गण ... स्वाहा ललाटे, ओं क्लीं गण ... स्वाहा दक्षिणनेत्रे, ओं ग्लौं गण ... स्वाहा वामनेत्रे, ओं गं गण ... स्वाहा मुखे इति न्यासो युक्तः । अत्र व्यापन-मनावश्यकमिति भाति ।

श्री महागणपतये नमः



विश्वनाथविरचितः

# विनायकोदयः

यद्रूपं हरिरुद्रमारगि[कि]रिजैस्तेजोभिरापूरितं
यद्वैनायकमिन्दिरागिरिसुतारत्युर्वरापुष्टिजैः ।
यत्तेजः शिवयोर्गणेश्वरवपुः स्निग्धाः [ग्धं] कटाक्षश्रिया-
स्त[त]स्याशेषगुरोरभीष्टफलदा पायात्सु? रस्मान् सदा १
बालार्कार्द्रैविलसितसरोजोपमास्याभिरामा
बालालोकप्रमुदिततरा बालचन्द्रावतंसा ।
बाला शीलप्रवरविलसद्बुद्धिलालानिषण्णा
बालाऽस्माकं प्रणुदतु सदा बालतां शारदा सा २
महार्णवाख्यान्महतः शिवागमादिदं समुद्धृत्य विनायकोदयम् ।
अहं प्रवक्ष्यामि यथा प्रपञ्चतः प्रपञ्चसारं सुमतिः स शङ्करः ॥
महार्णवाख्यात्प्रसृतं समृद्धं महार्णवं तं गहनं महार्थम् ।
वेत्तुं समर्था न भवन्ति देवा मुनीन्द्रमुख्या गुरुभार्गवाद्याः ४
शक्ताः कथं तन्मृतिजन्ममग्ना विगाहितुं सत्वविवर्जिता नराः ।
यथा तथाऽपि स्वगुरोः समाज्ञया प्रवक्ष्यते यत्तु विनायकोदयम् ॥
नित्यं परं निरुपमं विगुणं समस्तं
व्याप्तं स्वसंविदमलं ध्रुवमप्रमेयम् ।

एकं शिवं गुरुमहार्थमनन्तमस्ति
तद्वस्त्वतीन्द्रियमजं परमार्थमाद्यम् ६
तदेव वस्तु चानन्दं मुनिभिः समुदाहृतम् ।
तदानन्दघनं पश्चाच्चिन्मात्रं तदनौपमम् ७
तत्परं वस्तु बोधाख्यं तत्प्रयाति स बिन्दुताम् ।
स नाद इति सम्प्रोक्तो बीज इत्युच्यते बुधैः ८
रवो व्यक्तात्मकस्तस्माद्बिन्दोश्चैवाभवत् पुनः ।
शब्दब्रह्मेति स रवो वेदविद्भिरुदाहृतः ९
इच्छामाश्रित्य कालात्मा शिवस्तत्र यदा तदा ।
सृजत्यखिलभूतानि महदादीनि सर्वशः १०
अव्यक्तान्महदुद्भूतं महतोऽहङ्कृतिस्तथा ।
ततस्तु खानिलाग्न्यम्बुक्षितीत्याख्यानि वै तदा ११
भूतानि च क्रमात्तस्मादभवंश्च ततस्ततः ।
तेषां शक्तिगणानां वै जृम्भितं शक्तितो जगत् १२
तस्माद्धि गणसंज्ञाऽपि जगतां प्रोच्यते बुधैः ।
पतिः सर्वगणानां वा पतिर्गणपतिः स्वयम् १३
एवंभूतस्य देवस्य सिसृक्षा हि तदाऽभवत् ।
असृजच्च शिवः शक्त्या जगत्सर्वं चराचरम् १४
सृष्टस्य तनुते रक्षां संहृतिं च निजेच्छया ।
सृजते वै विरिञ्चस्य नामतः सृष्टिकर्मणि १५
स्थितौ च हरिरित्युक्तः संहृतौ रुद्र उच्यते ।
अहङ्कारस्तु सविराड् विराजः श्रवणादिकम् १६
तासामधीशानिन्द्राद्यान् लोकपालानकल्पयत् ।
ते गणेशमनाराध्य स्वाधिकारांश्चिकीर्षवः १७
विघ्नाभिभूता यजनं गणेशस्य व्यतन्वत ।
अविघ्नतः पुनः स्वं स्वमधिकारमकुर्वत १८

विघ्नानुत्पाद्य देवानां यतस्तानप्यशीशमत् ।
गणेशस्तेन विघ्नेशसंज्ञामाहुर्मनीषिण: १९
नायको यस्य नास्तीति ततोऽभूच्च विनायक: ।
मन्त्रात्मेति स सम्प्रोक्तो गणाध्यक्षोऽखिलप्रभु: २०
गणेशस्यास्य महतो मन्त्रमुद्ध्रियतेऽधुना ।
अथ[1] रक्तोर्ध्वमायाढ्यौ मांसमज्जातृतीयकौ २१
सबिन्दू प्राग्द्वितीयोक्तौ बीजमेतत्तदुद्धृति: ।
खाद्यन्तौ[2] तावधो मांसौ सवेदानुग्रहस्वरौ २२
दण्डिना सहितौ बीजौ तौ तृतीयचतुर्थकौ ।
क्रोधीशात्तृतीयं[3] साद्यं चन्द्रबीजं च पञ्चमम् २३
यानि[4] विष्णुशिवानङ्गवराहाधीश्वराणि च ।
उक्तानि तानि बीजानि पञ्चमं विघ्नदैवतम् २४
एतान्युक्त्वा जपेत्पश्चाज्जाग्रत्स्वप्नेन्दुभूषणम्[5] ।
एतस्य बीजषट्कस्य या हि शक्ति: परात्मिका २५
अस्य विघ्नेश्वरस्यैषा सानन्ता शक्तिरुच्यते ।
अरुणापञ्चमं[6] पश्चात्प्रथमस्वरसंयुतम् २६
जयिनीपञ्चमं[7] वर्णं सद्योजातस्वरान्वितम् ।
पतयेन्तं महापूर्वं गणशब्दं[7] समुद्धरेत् २७

---

1 मन्त्रोद्धारमाह— रक्त:-रकार: तदुपरि माया – ईकार: तद्युतौ मांसात्-लकारात् मज्जात: – षकारात् तृतीयकौ – शकारहकारौ बिन्दुयुतौ बीजे भवत: तथा च श्रीं ह्रीं इति । 2 खादि: खान्त: ककारगकारौ अधो मांसेन लकारेण युतौ सवेदानुग्रहस्वरौ– चतुर्थचतुर्दशस्वरयुतौ दण्डिना– अनुस्वारेण सहितौ तथा च क्लीं ग्लौं भवत: । 3 क्रोधीशात् ककारात् तृतीयं-गकार: आद्यस्वरेण बिन्दुना युतश्चेत् पञ्चमं बीजं गं इति सिद्धम् । 4 यानि बीजानि विष्णुशिवानङ्गवराहदैवतानि तानि बीजान्युक्तानि पञ्चमस्य विघ्नो देवता ।

5 प्रणव: । 6 अरुणा-तवर्ग: तत्र पञ्चमो नकार: प्रथमस्वरसंयुत: न इति । 7 जयिनी-पवर्ग: तत्र पञ्चमो मकार: सद्योजातेन ओकारेण युत: मो

तृतीयस्वरसंयुक्तं कौलिनीवर्गपञ्चमम्[1] ।
जयिन्याद्यं द्विरुक्तं स रक्तमादिस्वरान्वितम्[2] २८
द्वितीयं कौलिनीवर्गाद्द्वितीयस्वरसंयुतम्[3] ।
तृतीयमरुणावर्गात्पञ्चमं च तथैव च २९
आदिस्वरं द्वितीयं च संयुतं वर्णमुद्धरेत्[4] ।
आद्यं सर्वेश्वरीवर्गात्प्रथमस्वरसंयुतम्[5] ३०
वरं वरदशब्दं च ससर्वजनमेव च ।
वशं वशं चानयाथ वह्निजायामथोच्यते[6] ३१
अयं महागणेशस्य मन्त्रः सर्वार्थसिद्धिदः ।
सर्वयत्नेन गोप्ता च गुर्वाज्ञा प्रणवादिकम् ३२
जपतर्पणहोमांश्च पूजां चैव विशेषतः ।
मन्त्रेणानेन विधिना कारयेत्संयतेन्द्रियः ३३
तारश्रीशक्तिमारोर्वीबीजांश्च सविनायकान् ।
प्रोच्चार्य विश्वबीजाख्यं नमःपदमथो वदेत् ३४
भगवत्यै विभूत्यं च विभूतय इति क्रमात् ।
तस्य शक्तेरयं मन्त्रो[7] धर्मकामार्थमोक्षदः ३५
इयं शक्तिर्गणेशस्य महाशक्तीति कथ्यते ।
शक्तिबीजादिको मन्त्रो गणेशस्य यदा तदा ३६
पूर्वोक्ता या महालक्ष्मीः सैव गौरीति कीर्तिता ।

---

तथा च नमो इति । 8 महागणपतये इति । 1 कौलिनी वर्गः–षवर्गः तत्र पञ्चमः क्षकारः तृतीयस्वरयुतः क्षि इति । 2 जयिनी–पवर्गः तत्राद्यः पः रक्तः–रकारयुतः आदिस्वरान्वितो द्विरुक्तः प्रप्र इति । 3 कौलिनीवर्गाद्द्वितीयः सकारः द्वितीयस्वरसंयुतः सा इति । 4 अरुणावर्गात् तृतीयः पञ्चमश्च क्रमात्प्रथमद्वितीयस्वरयुतो दना इति । 5 सर्वेश्वरीवर्गात् यवर्गात्प्रथमः– प्रथमस्वरसंयुतः य इति तथा च क्षिप्रप्रसादनाय । 6 तथा च ओं श्रीं ह्रीं क्लीं गं महागणपतये क्षिप्रप्रसादनाय वर वरद सर्वजनं वशं वशमानय स्वाहा इति सिद्धम् ।
[illegible] : जनशब्दात् परं मेऽदप्रयोगश्च सम्प्रदायसिद्धोऽपि न मूलारूढः ।
7 शक्तिमन्त्रोद्धारः अस्पष्टः ।

तारादिविघ्नबीजान्तं[1] सम्बुद्धयन्तं गणं पतिम् ३७
वरं वरदशब्दं च सम्बुद्धयन्तं वदेत्पुनः ।
सर्वपूर्वं जनं पश्चाद्द्वितीयान्तमुदाहरेत् ३८
मे वशं चानयाथाग्नेर्जायां चैव समुच्चरेत् ।
अयं महागणेशाख्यो मन्त्रः सर्वार्थसिद्धिदः ३९
एष मन्त्रः प्रयोक्तव्यो न्यासकाले विजानता ।
तारादिविघ्नबीजान्ते[2] महापूर्वं गणं पदम् ४०
सम्बुद्धयन्तं समुच्चार्य शेषं पूर्ववदुद्धरेत् ।
यन्त्रालेखनमन्त्रोऽयं मन्त्रविद्भिरिति स्मृतम् ४१
तारादिविघ्नबीजान्तसंयुक्तविधिना पुनः ।
दीर्घस्वरप्रयुक्तेन सबीजेनैव मन्त्रवित् ४२
विदधीत षडङ्गानि[3] गणको ऋषिरुच्यते ।
छन्दो निचृत्प्रयुक्ता च गायत्री देवता स्वयम् ४३
स्वबीजं बीजमेव स्यात्स्वाहाशक्तिस्तथैव च ।
रमा जीव(बीज)स्तु विज्ञेयः स्वरः कील इतीरितः ४४
अधिष्ठात्री च दुर्गा स्यात्प्रकृतिर्गणपः स्मृतः ।
विनियोगोऽस्य सम्प्रोक्तः पुरुषार्थचतुष्टये ४५
एतानेवाखिलान् ज्ञात्वा मन्त्रमेनमथाभ्य(थ न्य)सेत् ४६

इति विनायकोदये विश्वनाथीये प्रथमः पटलः

अथ वक्ष्यामि संक्षेपात् न्यासानां विधिमुत्तमम् ।
यत्कृती सर्वदोषैस्तु मन्त्री सद्यो विमुच्यते १

---

1 महागणेशमन्त्रं न्यासार्हमाह– तथा च– ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपते वर वरद सर्वजनं मे वशमानय स्वाहा इति सप्तविंशत्यक्षरो मन्त्रः । 2 यन्त्रार्हमन्त्रमाह– अस्मिन्नेव मन्त्रे गणपते इति पदस्थाने महागणपते इति विशेषः । तथा च एकोनत्रिंशद्वर्णो मन्त्रो भवति । 3 ओं श्रीं ह्रीं क्लीं ग्लौं गं गां हृदयाय नमः । ओं श्रीं ह्रीं क्लीं ग्लौं गं गीं शिरसे स्वाहा इत्यादीनि षडङ्गानि ।

दीक्षाप्रपञ्चसारोक्तविधिनैव समीरिता ।
कर्तव्या यत्नतः सम्यङमन्त्रिणा शुद्धचेतसा २
गुर्वाज्ञातत्परो भूत्वा मन्त्री स्नात्वाऽथ दीक्षितः ।
अथाचम्य शुचिर्भूत्वा विविक्ते चोपविश्य च ३
सुखासने चैकमनाः प्राङमुखो वाप्युदङमुखः ।
गुरुं शिरसि[1] सम्भाव्य प्रणम्य च गणेश्वरम् ४
करशुद्धिं देहशुद्धिं ताळत्रयमथाचरेत् ।
अस्त्रेण दशदिग्बन्धं प्राणायामत्रयं पुनः ५
अनुग्रहेशसंयुक्तावुद्धरेत् स्कन्दपावकौ[2] ।
नादबिन्दुसमायुक्तावनेन मनसा सुधीः ६
त्रिंशत्त्रिंशत्पञ्चवारमुच्चार्यैवं विशोधयेत् ।
भुवं पञ्चगुणामापश्चतुर्वारं तथैव च ७
त्रिवारमनलं वायुं द्विवारं चैकधा नभः ।
अन्तःकरणशुद्ध्यर्थं व्योमवत्समुदीरयेत् ८
इति भूतानि संशोध्य प्रापयेत्समनन्तरम् ।
मूलाधारात्समुत्थाप्य कुण्डलीममितप्रभाम्[3] ९

---

1 शिरसि– गुरुभ्यो नमः इति गुरुं सम्भाव्य गणपतिं च संवन्द्य ओं श्रीं ह्रीं क्लीं ग्लौं गं गः अस्त्राय फट् इति करशुद्धिं देहशुद्धिं ताळत्रयं दिग्बन्धनं (अग्निप्राकारं च) विधाय [मूलेन] प्राणायामत्रयं विधाय भूतसंहारादि कुर्यात् ।

2 स्कन्दः – षः पावको– रः चतुर्दशस्वरबिन्दुयुक्तौ । तथा च ष्रौमिति । ष्रौमिति त्रिंशत्संख्यं प्राणायामपञ्चकं विधाय पञ्चगुणां पृथिवीमप्सु संहृत्य ष्रौमिति त्रिंशत्संख्यं चतुर्वारं प्राणायामं कृत्वा चतुर्गुणां अपः अग्नौ संहृत्य ष्रौमिति त्रिंशत्संख्यं त्रिवारं प्राणायामं कृत्वा त्रिगुणमग्निं वायौ संहृत्य ष्रौमिति त्रिंशत्संख्यं द्विवारं प्राणायामं कृत्वा द्विगुणं वायुं आकाशे संहृत्य ष्रौमिति त्रिंशत्संख्यं सकृत् प्राणायामं कृत्वा एकगुणं नभः अन्तःकरणे संहृत्य पुनः सकृत् प्राणायामं विधाय तदादीनि परमात्मनि संहृतानि भावयेत् ।

ततः यं रं वं इति बीजानि परिजपन् शोषणदाहनप्लावनानि क्रमात् कृत्वा परमात्मनः सकाशात् ष्रौमिति तत्तदुक्तसंख्यप्राणायामैरन्तःकरणाकाशवायुतेजोजलपृथिवीः सृजेत् । 3 हं हं हं इति परिजपन् मूलाधारादमितप्रभां कुण्डलिनीमुत्था-

षट्चक्रं च विनिर्भिद्य (ष्क्रम्य) हृ(भि)त्वा व्योमाम्बुजैन्दवम्
मण्डलं प्रविवेश्यान्तःस्रवत्पीयूषधारया १०
अकारादिक्षकारान्तं वर्णमालां न्यसेत्क्रमात् ।
यथास्थानं समावेश्य प्लावयेत्समनन्तरम् ११
षडङ्ग लिपिविन्यासं तथा व्यापकपूर्वकम् ।
शुद्धं सबिन्दु सर्गेण बिन्दुसर्गयुतां सुधीः १२
विदधीत यथास्थानं न्याससंख्यां लिपिं जपेत् ।
आधारशक्ति[1] श्रीमूलप्रकृतिं कूर्मसंज्ञितम् १३
पृथ्वीमनन्तामृताब्धिं ब्रह्माणं वास्तुपूरुषम् ।
रत्नद्वीपवनं रत्नमण्डपं कल्पवृक्षकम् १४
श्वेतच्छत्रं च हृदयपीठान्तं विन्यसेन्मनुम् ।
ङेनमोन्तमथो धार्मं ज्ञानं वैराग्यमेव च १५
ऐश्वर्यं चेति संयुक्ततारश्रीविघ्नबीजकान् ।
बाहूरुमूलयोश्चैव वामान्तं विन्यसेन्मनुम् १६
नञ्पूर्वाणि चैतानि पूर्ववद्बीजवन्ति च ।
पद्मं सत्वं रजः पश्चात् तमः सोमार्कपावकान् १७

---

ष्य आधारादिषट्चक्रमतीत्य द्वादशान्तस्थचन्द्रमण्डलं प्रवेश्य अकारादिक्षकारान्तां वर्णमालां परिजपन् तस्माच्चन्द्रमण्डलात्स्रवन्त्याऽमृतधारया स्वदेहमाप्लावयेत् ।

अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः इति (7–पत्रोक्त) क्रमेण आपादाम्भोजां संव्याप्य इत्यन्तं कृत्वा (8–10 पत्रोक्त) क्रमेण मातृकान्यासं विघ्नेशमातृकान्यासं च कृत्वा न्याससंख्यया लिपिं सञ्जप्य पीठपूजामात्मनि कुर्यात् । 1 तद्यथा–(ओं श्रीं गं) आधारशक्त्यै नमः मूलप्रकृत्यै –। कूर्माय – पृथ्व्यै – अनन्ताय – (अनयोर्व्यत्यासो युक्तः) अमृताब्धये – ब्रह्मणे–वास्तुपुरुषाय– रत्नद्वीपाय – रत्नमण्डपाय – कल्पवृक्षाय – श्वेतच्छत्राय – इति मूलाधारादिहृदयपीठान्तं विन्यस्य दक्षिणबाहुमूलोरुमूलयोः वामोरुमूलबाहुमूलयोः क्रमेण– ओं श्रीं गं धर्माय– (उत्तरत्र सर्वत्रादौ प्रणवलक्ष्मीगणेशबीजानि योजयेत्) ज्ञानाय– वैराग्याय– ऐश्वर्याय। ((दक्षिणोरुमूलबाहुमूलवामबाहुमूलवामोरुमूलेषु इति पाठान्तरं) आस्यगुह्यदक्षिणवामपार्श्वयोश्च– अधर्माय– अज्ञानाय– अवैराग्याय– अनैश्वर्याय– (गुह्यदक्षिणपार्श्व-

आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानं तु हृत्पद्मे पद्मकेसरकर्णिके १८
एतान्मन्त्रान् सबीजादीन् विन्यसेत् ङेनमोन्तिकान् ।
तीव्रा च ज्वालिनी नन्दा भोगदा कामरूपिणी १९
उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ।
एताः पूर्वादिषत्रेषु नवमी कर्णिकोपरि २०
सर्वयुक्तं शक्तिपदं प्रोक्त्वा कमलासनाय नम इति ।
आसनमन्त्रः प्रोक्तो नवशक्त्यन्ते समर्चयेन्मनुना २१
सर्वपीठमयं मन्त्रं विन्यसेत्कर्णिकोपरि ।
धर्मकन्दं ज्ञाननाळं तथा वैराग्यपद्मकम् २२
ऐश्वर्यकर्णिकामेवमुच्यते तन्मनीषिभिः ।
एवं सञ्चिन्त्य हृत्पद्मं तस्मिन् ज्योतिर्मयं परम् २३
अनौपम्यमतर्क्यं च भावयेत् परतः परम् ।
प्राणानायस्य विघ्नेशबीजं मनसि सञ्जपेत् २४
चत्वारिंशच्चतुर्वारं ऋचं सकृदथोच्चरेत् ।
माला [मूल] मन्त्रं चतुर्वारं करयोर्भावनां बुधः २५
अथान्तर्निभृतं ज्योतिरुद्धृत्य व्योममण्डलात् ।
अभ्येत्य बाह्ये निर्वातं करस्थं भावयेत्सुधीः २६

---

कण्ठवामपार्श्वेष्विति च पा.) ओं श्रीं गं पं पद्माय–सं सत्वाय– रं रजसे– तं तमसे– उं सोममण्डलाय– अं अर्कमण्डलाय– मं वह्निमण्डलाय– (अर्कमण्डलस्य सोममण्डल-पूर्वत्वं युक्तम्) इति हृदयपद्मे, अं आत्मने– उं अन्तरात्मने– मं परमात्मने– ह्रीं ज्ञानात्मने– इति हृदयपद्मकेसरकर्णिकायां विन्यस्य पद्मस्याष्टपत्रेषु कर्णिकायां च क्रमेण– (ओं श्रीं गं) तीव्रायै– ज्वालिन्यै– नन्दायै– भोगदायै– कामरूपिण्यै– उग्रायै– तेजोवत्यै– सत्यायै– विघ्ननाशिन्यै– इति विन्यस्य कर्णिकोपरि ओं श्रीं गं सर्वशक्तिकमलासनाय नम इत्यासनमन्त्रेण समर्चयेत् । एवं हृदयं धर्मकन्दं ज्ञाननाळं वैराग्यपद्मं ऐश्वर्यकर्णिकं विचिन्त्य तस्मिन् पद्मे ज्योतिर्मयमनौपम्यमतर्क्यं विभुं सञ्चिन्त्य प्राणानायम्य विघ्नबीजं चतुश्चत्वारिंशद्वारं सञ्जप्य गणानां त्वा ऋचं सञ्जप्य माला (मूल)मन्त्रं चतुर्वारं सञ्जप्य हृत्कमलमध्यगतपरंज्योतिः

मूलेन करयोश्चैव व्यापकं तु त्रिधा पुनः ।
अङ्गुष्ठादिकनिष्ठान्तं हृल्लेखाङ्गै (तलान्ताङ्गै) र्यथाक्रमम् ॥
व्यापकं च ततः कुर्यान्मूलेनैव त्रिधा मतम् ।
तारादिविघ्नबीजान्तैरनुलोमविलोमगां [गैः] २९
मातृकां सम्पुटीकृत्य स्वे स्वे स्थाने प्रविन्यसेत्[1] ।
सद्यो रुद्रशराग्न्याद्यस्वरैर्गान्तसमन्वितैः ३०
शान्त्यतीतादितत्वैश्च[2] सन्यसेत्पञ्चभिः सुधीः ।
आत्मने नम इत्यन्तैः कास्यहृद्गुह्यपत्स्वपि ३१
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
शान्त्यतीताख्यतत्वानि स्थितानि प्रतिलोमतः ३२
तारादिबीजैर्भूम्यन्तैः[3] पूर्वस्थाने नमोन्वितैः ।
विघ्नबीजादिशेषेण व्यापकत्वेन विन्यसेत् ३३
रमाबीजादिभिः पश्चात्पूर्वस्थानेषु पूर्ववत्[4] ।
हृन्मूर्ध्न्यास्येषु चरणगुह्ययोश्च न्यसेत्पुनः ३४
न्यसेदुक्तप्रकारेण बीजैः पञ्चभिरेव च[5] ।
विघ्नबीजादिभिः पश्चाद्रमान्तैश्च पदादिषु ३५

---

द्वादशान्तपद्मं प्रापय्य तस्मात् दक्षिणनाड्या स्वाञ्जलौ निपात्य मूलेन करयोस्त्रिवारं व्यापकं कृत्वा ओं श्रीं ह्रीं क्लीं ग्लौं गं गां अङ्गुष्ठिकाभ्यां नमः इत्यादि पूर्वोक्त (8-पत्रोक्त) क्रमेण करन्यास कृत्वा पुनर्मूलेनैव त्रिवारं व्यापकं कुर्यात् ।

1 ओं श्रीं ह्रीं क्लीं ग्लौं गं अं गं ग्लौं क्लीं ह्रीं श्रीं ओं नमः शिरसि इति वासिष्ठसंहितोक्तन्यासे अनुलोमविलोमबीजषट्कयोजनेन शिरःप्रभृति स्थानेषु मातृकान्यासः । 2 पञ्चतत्वन्यासमाह– ओं गों नमः पराय शान्त्यतीतात्मने नमः शिरसि । गें नमः ... शान्त्यात्मने – मुखे । ओं गुं ... विद्यात्मने– हृदये । गिं ...प्रतिष्ठात्मने– गुह्ये । गं ... निवृत्यात्मने– पादयोश्च न्यसेत् । 3 व्यापकन्यासमाह– ओं नमः शिरसि । श्रीं...मुखे । ह्रीं ..हृदये क्लीं... गुह्ये । ग्लौं ...पादयोः । गं गणपते वर वरद इत्यादिना व्यापयेत् । 4 सृष्टिन्यासमाह– ओं श्रीं नमः शिरसि । ह्रीं....मुखे । क्लीं.... हृदये । ग्लौं ... गुह्ये । गं .... पादयोः । 5 स्थितिन्यासमाह– ओं श्रीं नमः हृदये । ह्रीं .... मूर्ध्नि । क्लीं....मुखे । ग्लौं....पादयोः । गं .... गुह्ये ।

स्थानेष्वेतेषु विन्यासः कर्तव्योऽयं विपश्चिता[1] ।
सृष्टिस्थितिलयाख्याश्च न्यासा एते उदीरिताः ३६
कर्तव्यौ च पुनर्न्यासौ सृष्टिस्थित्यभिधानकौ ।
मूर्ध्नि[2] फाले तथा चाक्ष्णोरास्ये साधक सत्तमः ३७
शेषेण मनुना चैव व्यापयेत् सर्वमुच्चरन् ।
यथा तथा पुष्करवत् करेणैव तु विन्यसेत् ३८
आत्मयुक्तैर्नमोन्तैश्च कराद्वर्णैर्विलोमतः[3] ।
विभज्यमूलपूर्वैस्तैर्मूर्ध्न्यार्द्यङ्घ्र्यवसानकम् ३९
मूर्ध्नि फालाक्षिकर्णेषु नासिकास्येषु विन्यसेत्[4] ।
करपादचतुःसन्धिगुह्येषु हृदयेषु च ४०
एषु स्थानेषु मन्त्रार्णैर्मन्त्री स्वात्मविशुद्धये ।
पद यासं[5] ततः कुर्यान्नवभिस्तत्ववित्तमः ४१

---

1 संहारन्यासमाह– ओं गं नमः पादयोः । ग्लौं .... गुह्ये । क्लीं .... हृदये । ह्रीं ...मुखे । श्रीं .... शिरसि । पुनः सृष्टिस्थितिन्यासौ च कुर्यात् ।
2 पुनर्व्यापकन्यासमाह – ओं नमः मूर्ध्नि । श्रीं .... फाले । ह्रीं ... दक्षिणनेत्रे । क्लीं .... वामनेत्रे । ग्लौं .... मुखे । गं गणपते वर .... इति शेषेण व्यापनं यथा पुष्करवत् तथा करेण कुर्यात् । (ओं श्रीं ह्रीं क्लीं ग्लौं गं गां हृदयाय नमः इत्यादि न्यासं कृत्वा देवं यथोक्तवत् ध्यात्वाऽमृत-प्लावनं कुर्यात् अयं मूलेऽनुक्तः) ।
3 लोकत्रयन्यासमाह– (अत्र श्लोकार्धं लुप्तमिति भाति ।) ओं श्रीं ह्रीं क्लीं ग्लौं गं .... स्वाहा मं स्वर्लोकात्मने नमः इति मूर्धादिकण्ठान्तं, पुनर्मूल-मन्त्रमुच्चार्य उं भुवर्लोकात्मने नमः इति कण्ठादि नाभ्यन्तं, पुनर्मूलमन्त्रमु-च्चार्य अं भूर्लोकात्मने नमः इति नाभ्यादिपादान्तं न्यसेत् ।
4 वर्णन्यासमाह– ओं नमः शिरसि । श्री .... फाले । ह्रीं .... नेत्रयोः । क्लीं ....कर्णयोः । ग्लौं .... नासिकयोः । गं ....मुखे । दक्षिणकरसन्ध्यग्रेषु– गं णं पं तं यें नमः इति, वामकरसन्ध्यग्रेषु– वं रं वं रं दं नमः इति, दक्षिण-पादसन्ध्यग्रेषु– सं वं जं नं में नम इति, वामपादसन्ध्यग्रेषु– वं शां मां नं ग्रं नमः इति, स्वां गुह्ये हां हृदये च न्यसेत् (अत्र मूले गणपते इत्युक्तत्वेऽपि न्यासे गणपतये इति कथं? नासिकायां च विन्यसेदिति पाठे समञ्जसं भवति)
5 पदन्यासमाह– ओं श्रीं नमः मूलाधारे । ओं ह्रीं नमः लिङ्गमूले । ओं

रमादिपञ्चभिः पञ्च पृथग्बीजैः पदान्यथ ।
चतुर्भिः पञ्चभिः पङ्क्तिसंख्येन द्वितयेन च ४२
त्रिभिः पदैश्च ? ताराद्यै[मूलाधारे लिङ्गमूले]र्नाभि-
हृत्कण्ठयो[स्कन्धाय ]र्गले ।
भ्रूमध्ये फालशिरसोरेषु स्थानेषु विन्यसेत् ४३
ताराद्यवह्निपर्यन्तैः [जायान्तैः] पञ्चावृत्तिर्नमोन्वितैः[1] ।
बीजैस्तारादिभिः पश्चात्स्थानेष्वेतेषु विन्यसेत् ४४
मूर्ध्नि फालाक्षिवक्त्रेषु करयोः पादयोरपि ।
सन्धिष्वपि च साग्रेषु तत्र शेषेण व्यापकम् ४५
सतारया श्रिया युक्तवरादिमनुना पुनः[2] ।
पूर्वोक्तबीजसहितेनोत्तरेनोत्तारेण च ४६

---

क्लीं नमः नाभौ । ओं ग्लौं .... हृदये । ओं गं .... स्कन्धयोः (कण्ठे) । गणपते ...गले । वरवरद .... भ्रूमध्ये । सर्वजनं मे वशमानय .... ललाटे । स्वाहा .... शिरसि । (एवं च मूले मदुक्तः पाठः समीचीनः अन्यथा नवस्थानानि न भवन्ति । त्रिभिः पदैरित्यस्याप्यनन्वयो दुर्वारः) ।

1 पञ्चावृत्तिन्यासमाह– ओं ओं नमः शिरसि । ओं श्रीं....ललाटे । ह्रीं.... दक्षिणनेत्रे । क्लीं .... वामनेत्रे । ग्लौं .... मुखे । गं गणपत ....इत्यादिना व्यापनम् । दक्षिणकरसन्ध्यग्रेषु द्वितीयावृतिः । वामकरसन्ध्यग्रेषु तृतीयावृतिः । दक्षिणपादसन्ध्यग्रेषु चतुरावृतिः । वामपादसन्ध्यग्रेषु पञ्चमावृतिः । सर्वत्र शेषेण व्यापनम् ।

2 वरदन्यासमाह– ओं श्रीं वरवरद....स्वाहा नमः शिरसि । ओं श्रीं ह्रीं वर .... स्वाहा नमः मुखे । ओं श्रीं ह्रीं क्लीं वर .... स्वाहा नमः हृदये । ओं श्रीं ह्रीं क्लीं ग्लौं वर .... स्वाहा .... गुह्ये । ओं श्रीं ह्रीं क्लीं ग्लौं गं वर ... स्वाहा ... पादयोः । ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपते वर .... स्वाहा .... व्यापयेत् । इति प्रथमः । पादयोः, गुह्ये, हृदये, मुखे, शिरसि पूर्वोक्तन्यासो द्वितीयः । शिरसि, ललाटे, दक्षिणनेत्रे, वामनेत्रे, मुखे, तृतीयः । मुखे, दक्षिणकरे, वामकरे, दक्षिणपादे, वामपादे च चतुर्थः । दक्षिणोरौ, वामोरौ, दक्षिणभुजे, वामभुजे, कण्ठे च पञ्चमः । दक्षिणजानौ, वामजानौ, दक्षिणभुजमूले, वामभुजमूले, हृदये च षष्ठः । दक्षिणपादे, वामपादे, दक्षिणपार्श्वे, वामपार्श्वे, गुह्ये च सप्तमः । इति सप्तविधः वरदन्यासः ।

कास्यहृद्गुह्यपादेषु पद्गुह्यहृदयास्यके ।
शिरोललाटदृग्वक्त्रमुखेषु करपादयोः ४७
ऊर्वंसयुग्मकण्ठेषु जान्वोर्दोर्मूलयोर्हृदि ।
पादयोः पार्श्वयोर्गुह्ये न्यासो वरद उच्यते ४८
तत्र तत्र च मूलेन व्यापकं च प्रविन्यसेत् ।
जनानुरञ्जनकरः सर्वकामार्थदायकः ४९
विशिष्टार्थप्रदश्चैव न्यास एव न संशयः ।
बीजैस्तारादिभिः षड्भिर्विघ्नान्तैर्वज्रपञ्जरम्[1] ५०
हृदयां [हृद्यास्यां] सद्वयोरूर्वोः कण्ठे नाभौ च पार्श्वयोः ।
पृष्ठे हृदि शिरो वक्त्रे नेत्रे [त्रा] नासापुटेष्वपि ५१
पाण्योः सन्धिषु साग्रेषु तथैव पदयोः पुनः ।
मूर्ध्नि वक्त्रे च हृदये उदरे सक्थिपादयोः ५२
हृद्वक्त्रचक्रपद्माभीत्यभीष्टेषु मुखांसयोः ।
हृदयाङ्घ्र्यूरूदरेषु न्यासोऽयं वज्रपञ्जरः ५३
वज्रपञ्जरविन्यासाद्वज्रेणापि न हन्यते ।
हन्ति सर्वाणि रक्षांसि साधकेन्द्रो न संशयः ५४
सर्ववेदमयो रत्नतुण्डोद्धृत[ऽमृत] पुरस्कृतः ।
तुण्डत्रिविघ्ना न्यस्तव्याः सबीजा ङेनमोन्तिकाः[2] ५५

---

वज्रपञ्जरन्यासमाह– ओं नमः हृदये। श्रीं नमः मुखे । ह्रीं .... दक्षिणभुजे। क्लीं ...वामभुजे। ग्लौं....दक्षिणोरौ। गं....वामोरौ। इति प्रथमः। कण्ठे, नाभौ, पार्श्वयोः, पृष्ठे, हृदि द्वितीयः । शिरसि, वक्त्रे, दक्षिणवामनेत्रयोः, दक्षिणवामनासिकयोः तृतीयः । दक्षिणपाणिसन्धिषु अग्रे च चतुर्थः वामपाणिसन्धिषु अग्रे च पञ्चमः । दक्षिणपादसन्धिषु अग्रे च षष्ठः । वामपादसन्ध्यग्रेषु सप्तमः । मूर्ध्नि, वक्त्रे, हृदये, उदरे, सन्धिषु, पादयोरष्टमः । हृदये, वक्त्रे, चक्रपद्मअभयवरदस्थानेषु नवमः । मुखे, भुजयोः, हृदये, अङ्घ्रिद्वये, ऊरुद्वये, उदरे च दशमः ।

2 तुण्डन्यासमाह– ओं श्रीं ह्रीं क्लीं ग्लौं गं (ओं श्रीं गं इति वा) सर्ववेद॰

प्रधानदेवतातुल्यास्त्रिमूर्तिसमतेजसा ।
शिरोहृदयमूलेषु न्यासस्त्वेक: प्रकीर्तित: ५६
मूर्ध्न्यास्ये[1] हृदये गुह्ये पादयोश्च रमादिभि: ।
मिथुनैश्च प्रविन्यास: कर्तव्यो मन्त्रवित्तमै: ५७
रमारमेशौ तारश्रीविघ्नबीजसमन्वितौ ।
गिरिजा च वृषाङ्कश्च तारशक्तिसविघ्नकौ ५८
रतिश्च पुष्पवाणश्च तारकन्दर्पविघ्नकौ ।
महीवराहौ तारेण भूविघ्नपरिशोभितौ ५९
पुष्टिर्विनायकश्चैव श्रीस्वबीजयुतौ तथा ।
शक्त्यादिश्चेदयं मन्त्रो गिरिजादीन्यमूनि च ६०
सिद्ध्यामोदावपि तथा समृद्धिप्रमदौ पुन: ।
सकान्तिसुमुखौ चैव तारश्रीविघ्नसंयुता: ६१
सतारशक्तिविघ्ना: स्युर्मदनावतिदुर्मुखौ ।
मदद्रवाख्यविघ्नौ च द्राविणीविघ्नकर्तृकौ ६२
वसुधाराशङ्खनिधी तारशक्तिसविघ्नकौ ।
वसुमत्या पुष्पनिधिस्तारभूविघ्नसंयुत: ६३
नाभौ वामकटीदक्षकटयो: कण्ठे च जत्रुणो: ।

---

मयतुण्डाय (वर वरद ...स्वाहा) शिरसि । ओं– रत्नतुण्डाय (वर....स्वाहा) हृदये । ओं – अमृततुण्डाय (वर .... स्वाहा) मूलाधारे ।

1 मिथुनन्यासमाह– ओं श्रीं गं रमारमेशाभ्यां नम: शिरसि । ओं ह्रीं गं गिरिजावृषाङ्काभ्यां....मुखे । ओं क्लीं गं रतिमन्मथाभ्यां.... हृदये । ओं ग्लौं गं महीवराहाभ्यां.... गुह्ये । ओं श्रीं गं पुष्टिविनायकाभ्यां....पादयो: । ओं श्रीं गं सिद्ध्यामोदाभ्यां .... नाभौ । ओं श्रीं गं समृद्धिप्रमोदाभ्यां .... वामकट्याम् । ओं श्रीं गं कान्तिसुमुखाभ्याम् .... दक्षकट्यां । ओं ह्रीं गं मदनावतीदुर्मुखाभ्याम् ....कण्ठे । ओं ह्रीं गं मदद्रवाविघ्नाभ्याम्.... वामजत्रुणि । ओं ह्रीं गं द्राविणीविघ्नकर्तृभ्यां .... दक्षिणजत्रुणि । ओं ह्रीं गं वसुधाराशङ्खनिधिभ्यां .... वामपार्श्वे । ओं ह्रीं गं वसुमतीपुष्पनिधिभ्यां .... दक्षपार्श्वे इति ।

पार्श्वेषु तेषु विन्यस्य स्थानेष्वष्टास्वमून्यपि ६४
व्यापकं मूलमन्त्रेण[1] कुर्याच्च तदनन्तरम् ।
सृष्टयादयश्च कर्तव्या: पूर्वोक्तविधिना पुन: ६५
अङ्गन्यासं विधायाथ मुद्रादर्शनमाचरेत्[2] ।
तुण्डन्यासस्तु कर्तव्य: पूर्वोक्तविधिना बुधै: ६६
वक्त्रान्यासं[3] तत: कुर्याच्चतुर्वारं तु मन्त्रवित् ।
कफालनेत्रवक्त्रेषु बीजै: पञ्चभिरेव च ६७
तत्रैव व्यापकं[4] यस्य सर्वलोकप्रियो भवेत् ।
बीजयुक्तैश्च षड्विघ्नै: षडङ्गानि[5] क्रमात् पुन: ६८

---

1 मूलेन त्रिवारं देहे व्यापकं कृत्वा पूर्वोक्तसृष्टिस्थितिसंहारसृष्टिस्थितिन्यासान् कृत्वा पुन: पूर्वोक्ताङ्गन्यासं कृत्वा गणकऋषि: शिरसि । निचृद्गायत्रीच्छन्द: मुखे । महागणपतिर्देवता हृदये । इति न्यसेत् ।

2 मुद्रादर्शनं कुर्यात्– ओं श्रीं गं चक्राय नम: । ओं श्रीं गं पद्माय ....। ओं ह्रीं गं शूलाय .... । ओं ह्रीं गं पाशाय ... । ओं क्लीं गं इक्षुचापाय .... । ओं क्लीं गं रक्तोत्पलाय .... । ओं ग्लौं गं गदायै .... । ओं ग्लौं गं व्रीह्यग्राय .... । ओं श्रीं गं बीजापूराय .... । ओं श्रीं गं स्वदन्ताय .... । ओं श्रीं गं रत्नकलशाय .... । ओं श्रीं गं महालक्ष्म्यै .... । ओं श्रीं ह्रीं क्लीं ग्लौं गं त्र्यैलोक्यमोहनकनकमालायै .... इति । गं बीजं स्वाहा शक्ति: श्रीं बीजं क्लीं कीलकं अधिष्ठात्री दुर्गा गणपति: प्रकृति: धर्मार्थकाममोक्षार्थे विनियोग: एतान् हृदये स्पृष्ट्वा जपेत् । पुन: पूर्वोक्तवत् तुण्डन्यासं कृत्वा वक्त्रन्यासं चतुर्वारं कुर्यात् ।

3 वक्त्रन्यासो यथा– ओं गं ओं ऊर्ध्ववक्त्राय नम: ऊर्ध्वमुखे । श्रीं गं श्रीं पूर्ववक्त्राय.... पूर्वमुखे । ह्रीं गं ह्रीं दक्षिणवक्त्राय .... दक्षिणमुखे । क्लीं गं क्लीं पश्चिमवक्त्राय .... पश्चिममुखे । ग्लौं गं ग्लौं उत्तरवक्त्राय .... उत्तरमुखे । इति वक्त्रन्यासं चतुर्वारं कुर्यात् ।

4 व्यापकन्यासमाह– ओं श्रीं नम: शिरसि । ह्रीं .... फाले । क्लीं .... दक्षिणनेत्रे । ग्लौं .... वामनेत्रे । गं .... मुखे । गणपतेत्यादिना व्यापयेत् ।

5 ओं श्रीं ह्रीं क्लीं ग्लौं गं सिद्ध्यामोदाभ्यां नम: हृदयाय नम: । ओं .... गं समृद्धिप्रमोदाभ्यां .... शिरसे स्वाहा । ओं .... गं कान्तिसुमुखाभ्यां .... शिखायै वषट् । ओं ... गं मदनावतीदुर्मुखाभ्यां ....कवचाय हुं । ओं .... गं मदद्रवाविघ्नाभ्यां ...नेत्रत्रयाय वौषट् । ओं ...गं द्राविणीविघ्नकर्तृभ्यां....

नित्यं शुचिर्हविष्याशी मिताहारो जितेन्द्रियः ।
कृत्वा चैकमना भूत्वा परं दैवं विचिन्तयेत् ६९
न्यासैरेतैरपि च सकलैर्न्यस्तगात्रोऽथ मन्त्री
विघ्नेशोऽसौ भवति स महान् सर्वलोकप्रियश्च ।
तस्मादेनं परमगुरुणा चोक्तमार्गेण यस्मा-
न्नचासाख्यं वै विधिमखिलदं संयतोऽसौ करोतु ७०

इति विश्वनाथीये विनायकोदये द्वितीयः पटलः

अथ प्रवक्ष्ये गणनायकस्य स्मृतिं भवाब्धेःक्षपणे तु वह्निनम् ।
विन्दन्त्यविघ्नेन नृदेवदैत्या यया समस्तानचिरेण कामान् १
मन्दानिलसमुद्भूतरङ्ग(त्)कल्लोलसङ्कुले ।
ऐक्षवोद्यत्पयोराशौ माद्यत्तिमितिमिङ्गिले २
उत्ताप्तकाञ्चनोद्योतदीप्ते दीप्ततरूज्वले ।
वीचिमालापरिक्षिप्तरत्नमौक्तिकसञ्चये ३
पारिजातप्रभृतिभिः कल्पशाखिभिरिष्टकैः ।
किंशुकाशोकहिन्तालतालकालेयपद्मकैः ४
रा(प्रा)लेयकुन्दमन्दारमाकन्ददमनोङ्गु(नोङ्ग)[नेङ्ग]दैः ।
अङ्कोलकोलशैलेयकादळैः सर्जकैः कृते ५
मालती(लिनी)कृतमालोमबकुळाक्षोक्षचम्पकैः ।
मालतीमल्लिकाजातीकेतकीकरवीरकैः ६
पनसैः फलभाराढ्यनम्रशाखाशशाखिकैः(तैः) ।
अन्यैः सर्वर्तुकुसुमैः स्निग्धाच्छायैर्मनोरमैः ७
पुष्पपूर्णरसास्वादभ्रमभ्रमरगीतिभिः ।
गायद्भिरिव षट्पादैर्नृत्यद्भिरिव पल्लवैः ८
हसद्भिरिव कुन्दौघैर्वदद्भिरिव कोकिलैः ।

अस्त्राय फट् । एवं षडङ्गानि कृत्वा पुनर्यथोक्तं ध्यात्वा मूलमन्त्रं यथाशक्ति जपेदिति न्यासविधिः ।

अन्योन्यबद्धविटपैः पतिभिः समलङ्कृतैः ९
सुशीतळे सुसंसिक्तहरिचन्दनपङ्क्तिलैः [ले] ।
सततोपासितेन्द्वर्कज्योत्स्नाबालातपाञ्चिते १०
शिशिरीभूतसर्वाशामण्डले सुमनोहरे ।
शाखिशाखाकुटीरैकस्थितिसञ्जातसंहृदैः [सौहृदे] ११
नकुलाहिकुलैर्विश्वजगदाश्चर्यकारिणि ।
निशातनखरोच्चण्डपुण्डरीकमुखैर्मुहुः १२
स्वरातृतीयया(शङ्कया) चण्डमुग्धसारङ्गपोतकैः ।
प्रशान्तवैरसङ्घात(धेनुसञ्चार)सिंहधेनुमतङ्गजैः १३
मन्दारलीनलोलम्बपक्षस्पर्शविनोदिना ।
सुधापयोधिलहरीशीतशीकरवाहिना १४
गन्धवाहेन पुष्पाळिगन्धावाहेन लालिते ।
ऋतुभिः षड्भिरनिशं सेविते कुसुमोत्करैः १५
वङ्गसीसतरस्वर्कताम्रराजतकाञ्चनैः ।
कल्पितैः सप्तभिः सालैः क्रमादत्युन्नतैर्वृते १६
पिशाचैर्विकृताकारै रम्यैः किम्पुरुषैस्तथा ।
किन्नरैर्यक्षनिवहैर्गन्धर्वैर्भूषणोज्वलैः १७
कान्द [कान्त] बाहुलतामुद्रैर्गायद्भिर्विविधैः स्वरम् [रैः] ।
स्फुटीकृतविशेषाद्यन्महतीरवमञ्जुळम् १८
दैत्यवृन्दैः स्फुरद्दंष्ट्रैः स्वभूषणमनोहरैः ।
सिद्धैर्विद्याधरगणैः स्वप्रियाभिः सुसेविते २९
वङ्गादिराजतान्तोद्यत्षट्सालान्तरसंस्थितैः ।
एभिः स्वाभिमतप्राप्तिप्रार्थितात्मभिरावृते ३०
एषामन्तःसमुत्तुङ्गहेमसालान्तरे तळे ।
कल्हारेन्दीवराम्भोजरक्तोत्पलसिताम्बुजैः ३१
लसन्त्या चञ्चलन्मील[चलन्मीन]स्फुरन्मधुरधीरया ।

हराट्टहासनैर्मल्यचोरनैपुणतोयया २२
पद्मिन्याऽळकधौतोद्यत्तीरया परिशोभिते ।
अभीष्टफलसम्पन्नैर्हैमन्यैः(ण्यैः) कल्पशाखिभिः २३
आकण्ठविटपामोदकदम्बवनमिश्रितैः ।
विकिरत्कुसुमामोदसुरभीकृतदिङमुखैः २४
एभिर्मनोरमाकीर्णपुष्पगन्धारसोत्सुकैः ।
तत्(तान्) प्राप्तनिलयाह्लादराजहंसादिकोकिलैः २५
मयूरशुककारण्डभृङ्गैः सहितवल्लभैः ।
रसास्वादोद्भवोन्मत्तमधुरालापगीतिभिः २६
चुम्बनाडम्बराश्लेषकलक्वणितकूजितैः ।
अतिरम्याद्भुतस्निग्धाजायामाश्रित्य सादरम् २७
शैत्यमान्द्यसुसौरभ्यमारुतेनोपसेविते ।
प्रियैः सहासवामोदकौतुकाकारमानसैः २८
ऊर्वश्याद्यप्सरोभिश्च गन्धर्वैः समलङ्कृतैः(ते) ।
शतक्रतुप्रभृतिभिर्लोकपालैः कृतालये २९
सहेतिवाहनोत्तुङ्गसैन्यवृन्दैरुपासिते ।
चतुर्दिक्षु स्थितैस्तत्तत्कालस्तुत्यप्रभान्वितैः ३०
चतुःसप्तभिरत्युच्चगोपुरैः परिशोभिते ।
लोलमालापताकाभिः स्वर्णकेतुभिरन्वितैः ३१
खण्डिताखण्डलतनु(ः)[नोः] कान्तिभिर्मणितोरणैः ।
विचित्रिते विचित्राभिः पताकावलिभिर्युते ३२
भेरीशङ्खरवोन्मिश्रवल्लरीरवसङ्कुले ।
नमद्विद्याधरगणैस्तुवद्दिव्यर्षिमण्डले ३३
तत्प्रदेशे स्फुरद्रत्नस्थळे मुकुळनिर्मले ।
रत्नच्छायाङ्कुरापूर्णपालिकापरिशोभिते ३४
अनेकरत्नकलशसमुज्वलितदिङमुखे ।

उत्कीर्णमाणिक्यमयकुट्टिमे तितथो [वितते] च्छ्रिते ३५
चतुर्दिक्षु सुखाक्रान्त्यै कृतसोपानवर्त्मनि ।
चतुर्वेदमहास्तम्भकल्पिते सुमहोन्नते ३६
सर्वशास्त्रेतिहासौघनिर्मितस्य प्रभावतः ।
मण्टपस्य चतुर्द्वारफुरन्मरतके[कत]तरौ ३७
आलिप्तकळ(ल)भोद्गन्धासंक्षुब्धाभुवनान्तरे ।
विदिक्षु प्रोत्थितैः कल्पद्रुमैर्नानाप्रभोज्वलैः ३८
वज्रपुष्पैर्मरतक(कत)प्रोज्वलत्पत्रसञ्चयैः ।
विराजिते भ्रमद्भृङ्गमञ्जुगीतिमनोहरे ३९
स्फुरत्सिन्धूररजसा पिञ्ज(चिञ्जु) (वञ्जु)लीकृतमस्तकैः ।
सुपुष्करोद्यत्कुम्भान्तर्गळद्रत्नगणैर्मुहुः ४०
द्विचतुर्दिग्गजप(व)रैः प्रभिन्नमदमन्थरैः ।
आराधितगणेशानैः कोलाहलितदिङ्मुखैः ४१
तन्मध्ये तन्निभोत्तुङ्गकल्पवृक्षतरोरधः ।
पञ्चाननाननपदश्रीपीठवरसंश्रिते ४२
अशेषशेषमये त्रि? वह्निकोणविराजिते ।
सर्वमन्त्रमये दिव्ये सर्वाधारस्वरूपके ४३
आसीनं चिन्तयेदाद्यं मध्ये (माद्य)स्कन्दात्मकं परम् ।
लहरीललितं तेजोव्याप्तविश्वजगत्त्रयम् ४४
समस्तदुःखदुरितस्वान्तध्वान्तारिमण्डलम् ।
गणानामधिपं भक्तभुक्तिमुक्तिसुखप्रदम् ४५
एकदन्तं महेशस्य साक्षात् प्रथमनन्दनम ।
पदस्वसारं ? सर्वस्वं मत्तदन्तावळाननम् ४६
उमाकरेण (णु) कान्तस्य [न्तास्यं] रसास्वादेहि[भ]पोतकम् ।
भुजैर्द्वादशभिर्व्याप्तं कोटिबालार्कसन्निभम् ४७
सर्वरत्नसुगन्धाढ्यसारद्रव्यानुलेपनैः ।

आह्लादितारं जगतां धृतसंरक्तवाससम् ४८
अर्धेन्दुरत्ननिचयैर्बद्धकोटीरमण्डलम् ।
मदमण्डितगण्डान्त(तं) (र्व)वह्निसूर्येन्दुलोचनम् ४९
प्रत्युषः [त्यूष]पङ्कजमुखं शुभ्रवक्षस्स्थळोज्वलम् ।
गळन्मदजलौत्सुक्यलोलल्लोलम्बमालिकम् ५०
प्रोच्चलच्चामरोत्तुङ्गनिपतद्वायुना सह ।
बृहत्कर्णद्वयीताळमहासब[डम्ब]रताडनैः ५१
प्रक्षोभयन्तं शनकैर्मुखा[स्सुखा]यान्तं मुहुर्मुहुः ।
ना[दा]नाम्बुव्याजपीयूषलोलुपान् मधुपच्छलात् ५२
उपेतान् सुकृतोपेतान् स्वीकुर्वन्तं त्वनेतरान्[कथा] ।
पुष्करासक्तकुम्भान्तर्गळद्भिर्भक्तसम्पदे ५३
प्रवाळमौक्तिकोदंशुरत्नवर्षैरनारतम् ।
विकिरन्तं स्वपरितः श्रितदैत्यैः सुरैरपि ५४
अपेतवैरैरत्यच्छहारालङ्कृतकन्धरम् ।
नवशीकरबन्धूकदाडिमीकुसुमोपमम् ५५
चक्रशूलेक्षुचापोद्यद्गदादाडिमबीजकान् ।
पद्मपाशोत्पलांस्तद्वच्छाल्यग्रस्वरदाम्बुजैः [दान् भुजैः] ५६
दधानं दशभिर्या सा तया कनकमालिकाम् ।
दोर्भ्यां च धृतयाऽऽकृष्टनिःशेषभुवनत्रयम् ५७
पवित्रनागसङ्क्लृप्तयज्ञसूत्रोज्वलाकृतिम् ।
कृष्णाजिनधरं मौञ्जीमण्डितश्रोणिमण्डलम् ५८
अनायततरस्थूलह्रस्वाङ्घ्रिवपुषोज्वलम् ।
तुन्दिलं कुन्दमन्दारमन्दस्मितमुखाम्बुजम् ५९
पादपीठकृताशेषदेवदैत्यशिरोमणिम् ।
पादादादानिकं [पादादानाभिकं] नाभेराकण्ठं कमलापतिम् ६०
कण्ठादके (दाकं) पुरारातिं सर्ववेदमयं परम् ।

रक्तवर्णोज्वलाकाराः सर्वे देवमया अपि ६१
सर्वपर्वतराजेन्द्रमहामेरुमिव स्थितम् ।
उत्ताप्तरत्नमकुटप्रभाफलकशोभया ६२
नानामणिमयोत्तुङ्गविकसच्छिखरो (च्छीकरो) पमम् ।
सततास्थितकुम्भोद्यद्दाननिष्यन्दधारया ६३
अभीत(ः) कुञ्जरं जातनिर्झरोपमिताकृतिम् ।
तन्मदासक्तयुग्माढ्यभ्रमद्भ्रमरमालया ६४
दिव्यसिन्धुजलक्रीडादैवते [ता] स्तमितद्युतिम् ।
धृतनानायुधालोलपरीतभुजमण्डलैः ६५
बहुकल्पफलैर्व्याप्तकल्पोद्यानमिवोज्वलन् [म्] ।
स्वर्णसूत्राकलद्रत्नघाण्टायुगविनिःसृतैः ६६
मुक्तामणिमयोदंशुप्रवाम्भो (ङगो) [हो] रस्थकान्तिभिः ।
शिरसोवतरच्चन्द्रसूर्ययोरूर्ध्वरश्मिभिः ६७
अधोंशुभिश्च तत्सूत्रहारवस्त (न्त) मितोज्वलम् ।
ब्रह्मादिलोकपालान्तदेवताशक्तिजृम्भनात् ६८
कृतालयं महेन्द्राद्यैः परिती (रीत) मिव सुन्दरम् ।
भूम्यन्तरिक्षस्वर्गेषु व्याप्त[प्तं]स्तत्सदृशायतः [म्] ६९
आश्रिताभिमतप्राप्त्यै परिपूर्णकृपालुता ।
तत्प्राप्तप्राणवद्भ्यश्च सारूप्यदमिवोद्यते ७०
कर्णाभरणकेयूरकटकैरङगुलीयकैः ।
अनेकरत्नजा (ज्वा) लाढ्यैर्भूषितं देवतामयैः ७१
रत्नैः पुष्पैश्च माल्यैश्च भूषणैः परिभूषितम् ।
विघ्नं समस्तविघ्नौघपयोधिबडवानलम् ७२
समस्तसम्पदाधारं शूर्पकर्णमनामयम् ।
सच्चिद्रमारमेशाख्यसदानन्दस्वरूपकम् ७३
यस्य यत्तात्परं ब्रह्म जटामकुटमण्डितम् ।

ज्ञानैकरसभावाढ्यगिरिजागिरिजा[शा]त्मजः[म्] ७४
परंज्योतिर्मयं यस्य वदनाम्भोजमण्डलम् ।
इच्छाशक्तिस्वरूपाख्यं रतिमारमयं परम् ७५
अग्नीषोमात्मकं यस्य तदेव हृदयाम्बुजम् ।
यस्य यत्तात्परं ब्रह्म क्रियाशक्तिविजृम्भितम् ७६
चिद्घनं भूवराहाख्यं य(त)द्गुह्यं परिशोभितम् ।
यत्तात्त्वं शिवशक्त्या च स्फुरितं सकलात्मकम् ७७
पुष्ट्या सहितविघ्नेशपदं (मयं) तस्य पदाम्बुजम् ।
एवमुक्तस्वरूपाणां तेजसा बृंहितात्मनः ७८
तस्य देवस्य या शक्तिरखिलार्थप्रवर्तिनी ।
पद्मापद्मेशगौरीशगौरीरतिरतीश्वरैः ७९
वसुन्धरावरासिना [राहाभ्यां] अथ पुष्टिविनायकैः ।
एभिस्तेजोमयैरुद्यत्प्रभारूपा रमा तया ८०
सर्वसौन्दर्यकान्त्या च ज्वलद्भूषणभूषया ।
बालार्कभिन्नपद्मोद्यद्द्रजःपुञ्जनिभाङ्गया ८१
पद्मोद्यत्करयाऽऽश्लिष्टदेहं वल्लभया सदा ।
वामे तु देहे(व्या) (मोरुदेह)स्थितया दिव्यमाल्यदुकूलया ८२
तन्मुखाम्भोजषट्पादीकृतापाङ्गश्रिया पुनः ।
सम्भवस्थितिसंहाररतिरोधानुग्रहप्रभुम् ८३
सर्वतेजोमयं सर्वपुरुषार्थप्रदायकम् ८४
अग्न्या(ज्ञा)दित्रित्रिकोणेष्वथ गणनाथान् भुजैर्दशभिः ।
शक्त्या इ(भी)ष्टा[युक्ता]नरुणानाश्रितकल्पद्रुमांस्त्रिकोणस्य ८५
त्रीनपि गणेशस्य तुल्यान् विधिहरिहरौ विशो[हरानिति]ध्यायेत्
सर्वाभीष्टप्राप्त्यै सर्वापन्नाशनाय सन्ततधीः ८६
रमारमेशावग्रस्थश्रीवृक्षोपान्तमाश्रितौ ।
गिरिजा च वृषाङ्कश्च तद्दक्षे वटसंश्रितौ ८७

रतिपुष्पशरौ पृष्ठस्थितावश्वत्थमाश्रितौ ।
महीवराहौ वामेन तङ्गद्रुमजुषौ तथा ८८
मध्ये कल्पद्रुमेङ्कोलशौर्या ? पुष्टिविनायकौ ८९
पूर्वोक्तौ हेमबालप्रसृतहर(रि)विभो ? पद्मयुक्चक्रशङ्खै-
रन्यौ पाशाङ्कुशाख्यत्रिशिखपरशुकै रक्तसौवर्णवर्णौ ।
रक्तौ ताविक्षुचापौ रतिकुसुमशरौ जृम्भयुग्मोत्पलौ ता-
वन्यौ पीताञ्जनाभौ कमल[कलम]शुकगदाहेतिभिर्ध्यानगम्यौ ॥
पाशाङ्कुशोत्पलयुगौ रक्तौ पुष्टिविनायकौ ।
एतान्येवंविधान्येव ध्येयानि मिथुनानि वै ९१
पाशाङ्कुशाभीष्टकराः[1] सकान्तास्त्रिकोणबाह्यात्त्रिषु विघ्नना-
थाः। आरक्तशोभा मदवेगमत्ता ध्येयाः समस्ताभिमतप्रदाश्च ॥
आमोदोऽग्रे कोणे सिद्धियुतस्तदुभयकोणसंयुतौ ।
भूयः प्रमोदसुमुखौ समृद्धिकान्त्यन्वितौ ध्येयौ ९३
ध्येयोऽथ दुर्मुखो यवा(मा)त्याश्रितो [पृष्ठे समाश्रितो] मदना-
वत्या । तस्योभयकोणगतौ ध्येयावथ विघ्नविघ्नकर्तारौ ।
निःशेषविघ्नशमनौ मदद्रवाद्राविणीसहितौ ९४
मुक्तामणिचारुनिभौ विकिरन्तावपि धानान्यनिशम् ।
वसुधारयोपगूढौ वसुमत्या चैव शङ्खपुष्पनिधी ९५
दक्षे च वामभागे गणेशितुः संस्थितौ सततम् ।
ध्येयाविमौ यथावत् सुधिया निजकर्मलाभाय ९६
मूर्धाभिषिक्तैर्भूपालैश्चिरसाम्राज्यकांक्षिभिः ।
वाहनाद्यायुधैः सार्धं सेवितं पुरतः सदा ९७
शान्तया[अन्तर्या]गोपकरणैर्धर्मज्ञैर्वेदवादिभिः ।
सभार्यैर्दक्षिणे भागे सेवितं मुनिभिः सदा ९८
अध्यात्ममयशास्त्रज्ञैः पृष्ठतः सनकादिभिः ।

---

1 अभयेष्टकरा इत्यर्थः ।

सन्ततोपासनायुक्तैरुपासितमृषीश्वरैः ९९
वामभागे च गन्धर्वैर्नारदप्रमुखैः सदा ।
वीणावेणुविनादैश्च गायद्भिरतिमोदिता [दतः] १००
चिरकालगणेशार्चालब्धसारूप्यधामभिः ।
तत्कटीमस्तकचलत्तात्तद्भूषणभूषितैः १
नमद्भिश्च स्तुवद्भिश्च स्मरद्भिश्च समन्ततः ।
शुश्रूषमाणैर्गायद्भिर्नृत्यद्भिर्गणनायकैः २
परीतं विश्वजगतां नायकं विश्ववन्दितम् ।
विश्वाकर्षकरं विश्वजीवनं विश्वरञ्जनम् ३
विश्वोत्पत्तिहरं विश्वमङ्गलं विश्वभोगदम् ।
सर्वरोगहरं सर्वकालमृत्युप्रभञ्जनम् ४
सर्वेन्दिराकरं सर्वमनोरथकरं परम् ।
सर्वतेजोमयं नित्यमव्यक्तं सकलात्मकम् ५
सकलैः परिवारैश्च ज्वलन्तं भावयेद्बुधः ६
इत्थं सम्प्रार्थ्य यत्नाद्गुरुवरमतिसन्तोष्य लब्धा [ब्ध्वा] यथाव-
न्मन्त्रं ध्यात्वा गुरूक्त्या युगशतसहितं यो जपेद्वेदलक्षाम् ।
चत्वारिंशत्सहस्रान्वितमपि सचतुष्काब्धिसाहस्रसंख्यं
चत्वारिंशच्च विन्दत्यखिलमखिललोकप्रियश्चापि भूयात् ७

इति विश्वनाथीये विनायकोदये तृतीयः पटलः

अथ प्रवक्ष्यामि गणेश्वरस्य यतात्मकानां महतीं पुरातनीम् ।
पूजां च पद्मे हृदये कृशानोः[नौ] सुभक्तिभाजां पुरुषार्थदायिनीम्
यत्नात् प्रसाद्य च गुरुं वसुकायासु(म्बु)भिः पुनः ।
दीक्षितस्तु हविष्याशी मिताहारो जितेन्द्रियः २
पाणिपादावपि निजौ प्रक्षाळ्याचम्य वाग्यतः ।
विविक्ते भूतळे रम्ये स्युर्लक्ष्णे [सुश्लक्ष्णे] मृदुविष्टरे ३
बद्धपद्मासनो भूत्वा गुरुं गणपतिं नमेत् ।

प्राणानायम्य विधिवत् सलिपि [लिपिभिः] न्यस्तदेहवान् ४
देवं च हृदये ध्यात्वा यथावद्गणनायकम् ।
चत्वारिंशच्चतुःसंख्यं जप्त्वा मूलमनुं सुधीः ५
अग्रे स्थण्डिलमालिख्य [प्य] गोमयेन सुगन्धिना ।
पुष्पाक्षतानि विकिरेत् मूलमन्त्रेण मन्त्रवित् ६
अग्निमण्डलमन्त्रेण मूलमन्त्रेण शोधितम् ।
अर्घ्यपाद्यासनं तत्र प्रतिष्ठाप्यार्चयेत्सुधीः ७
अस्त्रप्रक्षाळितं शङ्खं निदध्यात् कृतधूपित(क)म् ।
सूर्यमण्डलमन्त्रेण समूलेनार्चयीत तम् ८
मूलेन हृदयेनात्र पुष्पाक्षतमनुक्षिपेत् ।
मूलादिक्षाद्यकारान्तं [i] शिरोमन्त्रान्तमातृकाम् ९
उच्चरन् सलिलैः शुद्धैस्तं शङ्खं सम्प्रपूरयेत् ।
सोममण्डलमन्त्रेण समूलेनाक्षतादिभिः १०
सम्पूज्यावाहयेत्तीर्थं मुद्रया चाङ्कुशाख्यया ।
गङ्गे च यमुने चैव गोदावरि सरस्वति ११
नर्मदा सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।
इत्युच्चरन् शङ्खजले तीर्थं मार्ताण्डमण्डलात् १२
शिखामन्त्रेण तच्छङ्खजलस्योपरि गाळिनीम् ।
उक्त(क्ष) (र्ग)मार्गेण मुद्रान्तं गाळिनीमपि दर्शयेत् १३
नेत्रेण चावलोक्याथ कवचेनावकुण्ठच तम् ।
द्वाविंशत्यक्षरेणैतत् गाङ्गेयमनुनाऽर्चयेत् १४
द्वितीयस्वरसंयुक्तं तमेवं पुनरुद्धरेत् ।
द्वादशस्वरसंयुक्तं संच्य(ख्यः)[तं च] पालाशमन्त्रावित् १५
विश्वमुख्याश्चतुर्थ्यन्तं तथैव च शिवामृतम् ।
रुद्रान्नारायिणीशब्दं नतिद्वयसमायुतम् १६
एष गङ्गामनुः प्रोक्तः सर्वपापप्रणाशनः[1] । १७

सितमकरनिषण्णां शुभ्रवर्णां त्रिणेत्रां
करधृतकलशोद्यच्चो[त्सो]त्पलाभीत्यभीष्टाम् ।
विधिहरिहररूपां सेन्दुकोटीरजूटां चूडां]
कलितसितदुकूलां जाह्नवीं तां नमामि १८
एवं ध्यात्वा समभ्यर्च्य सान्निध्यं तत्र भावयेत् ।
तां च तेजोमयीं ध्यात्वा तस्मिन्नेव जलात्मिकाम् १९
एतत्तीर्थजले सम्यक् सम्भाव्य परदेवताम् ।
यजेच्च मूलमनुना चतुर्वारमनन्यधीः २०
दिग्बन्धं च तथाऽस्त्रेण कुर्यात्तत्र विचक्षणः ।
इति संस्तुत्य तेनैव तीर्थेन प्रोक्षयेत्सुधीः २१
आत्मानं भूतळं तत्र पूजोपकरणानि च ।
अभ्युक्ष्य मूर्ध्नि स्वगुरुं मूलाधारे विनायकम् २२
मूलाधारेऽथ हृदये भ्रूमध्ये मूलविद्यया ।
सम्पूज्य तां चतुर्वारं मूलविद्यां जपेत्पुनः २३
भावयेत्परमानन्दं चिन्मात्रकमनौपमम् ।
अखण्डमण्डलाकारमात्मानं मन्त्रवित्तमः २४
शिवादिगुरुपङ्क्तीर्वै द्वादशान्ते समर्चयेत् ।
तस्मिन्नेव पुनर्मूलं शक्त्युत्थापनपूर्वकम् २५
मार [रमा] बीजादिभिः पश्चान्न्यासस्थानेषु पञ्चभिः ।
आपादादातळं व्याप्तां रेखां तेजोमयीं पराम् २६
ध्यायेत्तारादिहृद्यन्ता?मुपर्युपरि पूजयेत् ।
आधारशक्तिमादौ च श्वेतच्छत्रान्तमन्त्रकैः २७
तद्वद्धर्मादिमन्त्रैश्च (भिश्चैव) शक्तिभिर्नवभिः पुनः ।
हृदये परितस्ताभिः पीठं तन्मनुनाऽर्चयेत् २८
तत्र मूर्ति गणपतेर्भावयेन्महतो यथा २९

1 (पृ. 80) ओं ह्रीं गङ्गायै विश्वमुख्यै शिवामृतायै नारायिण्यै नमो नमः ।

अनुपममखिलार्तिध्वंसनं व्योमपद्म-
प्रवरमगणितोद्यत्पत्रकं स्वच्छवर्णम् ।
दिवसरजनिनाथभ्राजमाना(नं करञ्जे)ङ्कराङ्घ्रे(रन्ध्रे)
स्मरतु पुनरमुष्मिञ्ज्योतिषां धाममा[चा]द्यम् ३०
निपतितमथ तस्मात्तेजसः सन्निकाशा-
ल्लघुतरकरमुद्यत्कोटिभास्वत्प्रकाशम् ।
हृदयनिहितमूर्ति भावयित्वा समर्च्य
मनुविदनुविदध्यात्सार्धमङगादिभिश्च ३१
विघ्नत्रयादिकुसुमं निध्यन्तमपि पूजयेत् ।
परामृताप्लावनेन देवं तुष्टं विचिन्तयेत् ३२
पुनर्मूलेन सम्पूज्य भावयेन्मन्त्रवित्तमः ।
सर्वानित्वं परीवारान् देवे प्रविलयं गतान् ३३
तेजोरूपं ततो देवं द्वादशान्ते नियोजयेत् ।
उ[गु]रुक्रमं च तत्रैव पूजयेत्समनन्तरम् ३४
स्वगुरुं मूलदेवं च भक्त्यैक्यं भाव्य चार्चयेत् ।
उद्वास्य पूजाकुसुममाघ्रायाथ विसर्जयेत् ३५
अन्तर्यागं समाप्यैवं बाह्ययागमथार्चयेत् ।
हैमे वा राजते ताम्रे दर्पणे वा सुनिर्मले ३६
भौर्जे वा वितते पत्रे समे निःसुषिरे शुभे ।
स्थण्डिले क्लृप्तरक्ताब्जकर्णिके स्थण्डिलेऽथ वा ३७
संलिखेद्रोचनालाक्षाकुङकुमैश्चन्द्रमिश्रितैः ।
मदेन मृगजेनाऽपि सह गन्धोदकाप्लुतैः ३८
यन्त्रं तत्र यजेद्देवं महागणपतिं सुधीः ।
कर्णिकायां लिखेत् पूर्वं नवयोनिं महाप्रभम् ३९
अष्टपत्रं बहिः पद्मं [पत्रं] वृत्तत्रयसमन्वितम् ।
चतुरस्त्रद्वयं तस्य बाह्ये शूलाग्रलक्षितम् ४०

ततो मध्ये त्रिकोणान्तस्तेजः पुञ्जोपबृंहितम् ।
चन्द्रक्षमाता(क्षका)रकान्वीत [वीतं] क्रमोत्क्रमविनायकम् ४१
यन्त्रस्य मध्ये साध्याघ्यां(ख्यं)लिख्याद्यन्त्रविधानवित् ।
तस्याग्रदक्षपृष्ठेषु वामभागे यथाक्रमम् ४२
रमादिक्ष्मान्तबीजानि तथाऽऽलिख्य विचक्षणः ।
पूर्वाश्रौ पश्चिमाश्रौ च बीजे पाशाङ्कुशे लिखेत् ४३
दक्षिणाश्रिषु तारादिबीजत्रयमथाश्रिषु(थ त्रिषु) ।
कन्दर्पादीनि चान्यासु तिसृषु त्रीणि चालिखेत् ४४
वृत्ताष्ट[त्त षट्]कोणयोरन्तः षडङ्गान्यभितो लिखेत् ।
अग्न्यादि[1](अन्यानि)मूलमन्त्रस्य शिष्टान् वर्णांस्त्रिशस्त्रिशः ॥
पूर्वादिषु दळेष्वेवमीशे वर्णद्वयं भवेत् ।
तद्बाह्ये प्रथमे वृत्ते तारश्रीसम्पुटीकृतान् ४६
अकारादिक्षकारान्तान् वर्णान् पर्या....?[सर्वान्] लिखेद्बुधः ।
तारेभ[तानेव] मुखबीजाभ्यां सम्पुटीकृत्य तद्बहिः ४७
वृत्ते क्षकारात्प्रथमान[रप्रथमान][द]कारान्तं[तान्] समालिखेत्
पाशाङ्कुशाभ्यां तद्बाह्ये वृत्तमावेष्टयेत्सुधीः ४८
चतुरस्राष्टकोणेषु पृथिवीबीजमालिखेत् ४९
एव यन्त्रवरं विलिख्य सुखदं दुःखाम्बुधिध्वंसनं
तस्मिन् देवमथार्चयीत विधिना यो मन्त्रविद्भक्तिमान् ।
सम्प्राप्नोत्यखिलां श्रियं गणपतेरस्य प्रसादादिह
स्वव्याप्तौ परमेश्वरस्य पदयोः सायुज्यमप्यश्नुते ५०

इति विश्वनाथीये विनायकोदये चतुर्थः पटलः

अथात्र यन्त्रे पूजायां विधानं वक्ष्यतेऽधुना ।
महागणपतेरस्य श्रीमतो गुर्वनुग्रहात् १
गुरुं गणपतिं चैव वामदक्षिणपार्श्वयोः ।

1 अग्न्यादीति पूर्वत्रान्वेति अग्न्यादितः षडङ्गानीत्यर्थः ।

आधारशक्तिप्रभृतीश्छत्रान्तं कर्णिकोपरि २
आग्नेयादिषु कोणेषु धर्मादींश्चतुरो यजेत् ।
अधर्मादींश्चतुर्दिक्षु पूर्वादिषु यथाक्रमात् [मम्] ३
मध्ये गुणानां त्रितयं मण्डलानामथात्मनाम् ।
कर्णिकायां ततः शक्तीर्नव तीव्रादिकाः क्रमात् ४
प्रागादिषु दळेष्वष्टौ नवमीं कर्णिकोपरि ।
पीठमन्त्रेण तत्रैव चतुःपुष्पैः समर्चयेत् ५
शक्त्यादिश्चो[श्चे]दयं मन्त्रो गुणत्रयसमर्चनात् ।
अनन्तरं समभ्यर्च्य मण्डलत्रितयादिकम् ६
शब्दब्रह्ममये विश्वशक्तितत्वात्मिकोपरि ।
ब्रह्माण्डवितते वेदसारगर्भो[र्भेऽ]त्र यन्त्रके (मन्त्रके) ८
मूर्तिं गणेशगायत्र्या स्थापयित्वोपचारयेत् ।
चतुर्थ्यन्तं तत्पुरुषपदमुक्त्वाऽथ विद्महे ९
वक्रतुण्डं चतुर्थ्यन्तं धीमहे तत्परं वदेत् ।
विघ्नः प्रचोदयाच्चेति गायत्रीमन्त्र उद्धृतः १०
तस्यां मूर्तौ गणेशानां[नं] व्योमपद्मं [पद्मे] यथा पुरा ।
अनेन मन्त्रेणावाह्य स्थापयित्वाऽर्चयेत्सुधीः ११
मूलान्ते तारयुगळं नमोन्तं च त्रिरुच्चरेत् ।
आवाहनविधाविष्टमन्त्रः सम्प्रतिपादितः १२
आवाहनादिमुद्राश्च समस्ताः सम्प्रदर्शयेत् ।
ततो लिपिं च तत्वादि सृष्ट्यादीनां च पञ्चकम् १३
तुण्डन्यासं षडङ्गानां युगळं च प्रविन्यसेत् ।
गुरूपदेशतः पश्चाद्धेतिमुद्राः प्रदर्शयेत् १४
अर्घ्यादिभूषापर्यन्तं देवं देवीं समर्चयेत् १५
विघ्नत्रिकोणस(प)रमादिभिरावृती द्वे
विघ्नैर्निधिद्वययुतैर्विवृति(ती) द्वितीये [स्तृतीया] ।

अङ्गैश्च विघ्नदशकैस्त्वथ मातृभिश्च
विघ्नाष्टकैर्दशभिरप्यणिमादिभि(कै)श्च १६
सि(नि)द्धयष्टकेन हरितामधिपैर्दिशेभैः
कल्पाङ्घ्रिपैरपि च पञ्चभिरर्चनीयः ।
श्रीमन्महागणपतिः सकलार्थसिद्धयै
भावतैर्भवाब्धिभयभङ्गपरैर्गुरूक्त्या १७
अग्रादिषु त्रिकोणस्य कोणेषु त्रीन् गणेश्वरान् ।
त्रिकोणस्याग्रतो दक्षपश्चाद्वामे रमादिकान् १८
रमेशक्रोडयोर्मध्ये पञ्चमं परिपूजयेत् ।
सिद्धय मोदावग्रकोणे तस्य दक्षिणवामयोः १९
कोणयोरितरौ पूज्यौ मदनावतिदुर्मुखौ ।
पृष्ठकोणेषु तद्दक्षवामयोरितरावपि २०
अन्ययोः कोणयोः पूज्यौ निधी दक्षिणवामयोः ।
आमोदमनुसृत्याग्रे वृत्तमाश्रित्य चाष्टकम् २१
श्यामवर्णं महाकायं घण्टाभरणभूषितम् ।
शब्दब्रह्ममयं पत्रसंस्थं मूषिकमर्चयेत् २२
तारादिविघ्नबीजान्ते महापदपुरस्कृतम् ।
चाषायेति पदं प्रोक्त्वा नत्यन्तमनुनाऽमुना २३
पूजयेद्गणनाथस्य वाहनं सर्वदैवतम् ।
अग्नीशरक्षःपवनकोणसन्धौ हृदादिकाः २४
नेत्रमग्रे च दिक्ष्वस्त्रमित्यङ्गैः परिपूजयेत् ।
विघ्नो विनायको वीरः शूरो वरद एव च २५
हस्त्याननैकदन्तश्च लम्बोदर इहाष्टमः ।
क्षिप्रप्रसादो नवमो महागणपतिः पुनः २६
पूर्वादिकेसरेष्वष्टौ अधश्चोर्ध्वं सबीजकाः ।
पूजनीयाश्चतुर्थ्यन्ता दश विघ्नेश्वरा इमे २७

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराह्यैन्द्री च चामुण्डी महालक्ष्मीस्तथैव च २८
पूर्वादिदळमध्येषु तारश्रीबीजपूर्वकाः ।
मातरोऽष्टाविमे पूज्या महासिद्धिप्रदायकाः २९
विनायको विरूपाक्षः क्रूरकर्माऽपराजितः ।
चण्डवीरो(वेगो) हयग्रीवः कराळश्चण्डविक्रमः ३०
पूर्वादिषु दळाग्रेषु पूज्या अष्टौ गणेश्वराः ।
अणिमा लघिमा चैव महिमेशित्वमेव च ३१
वशित्वसिद्धिप्राकाम्यभुक्तीच्छारसमेव च (मोक्षगाः)
[गरिमा प्राप्तयस्तथा] ।
सिद्धयः क्रमशः पूज्या वृत्ते दिक्षु दशस्वपि ३२
निधी पद्ममहापद्मौ शङ्खो मकरकच्छपौ ।
कुमुदोऽनन्तनीलौ च निधयोऽष्टाविति क्रमात् ३३
वृत्ते द्वितीये क्रमशः पूज्याः पूर्वादिदिक्ष्वमी ।
इन्द्रादिदिगधीशास्ते सायुधाः सपरिच्छदाः ३४
वृत्ते तृतीये सम्पूज्याः क्रमशः सर्वपुष्टिदाः ।
कुबेररुद्रयोर्मध्ये पूज्यः कुम्भोदराह्वयः ३५
श्रीबीजपूर्वोऽयं भक्तः विघ्नविघ्नान्तमः ? [कः] परः ।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ३६
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।
पूर्वादिष्वष्टकोणेषु पूज्याः सहितवल्लभाः ३७
शूलमूलेऽग्निकोणस्थं मन्दारं (र)निर्ऋतीरयोः ।
सन्तानपारिजातौ च शार्वे च हरिचन्दनम् ३८
कल्पवृक्षं गणेशस्य पृष्ठे श्रीबीजपूर्वकम्[कान्] ।
सम्पूजयेत् कल्पवृक्षानिमान् सङ्कल्पसिद्धिदान् ३९
द्वादशैतान् परीवारान् जलादिकुसुमान्तिकैः ।

उपचारैस्त्रिभिर्भक्त्या पूजयेन्मतिमत्तमः ४०
सुगन्धैररुणैः पुष्पैर्निच्छिद्रैश्च मनोरमैः ।
पुष्पयागं प्रकुर्वीत चतुर्वारं प्रधानके ४१
एकवारं ततो देव्यां परिवारे सकृत् सकृत् ।
कल्पद्रुमान्तं सम्पूज्य गणानान्त्वेत्यृचा प्रभुम् ४२
अभ्यर्च्य मातृपर्यन्तं पुनरभ्यर्चयेत् सुधीः ।
तारसम्पुटितैस्तारवर्णैर्व्यस्तैर्नमोन्तिकैः ४३
समस्तैश्च महादेवमथाङ्गान्तं च पूजयेत् ।
ब्रह्माणं दक्षिणे भागे विष्णुं देवस्य चोत्तरे ४४
गळदेशे नीलरुद्रं पुष्पेण परिपूजयेत् ।
सव्याहृत्या च गायत्र्या पूर्वोद्दिष्टविधानतः ४५
त्रिधा त्रिवारं हृदये देवस्य परिपूजयेत् ।
अर्चयेद्वक्षसि तथा पुनः स्थावरजङ्गमम् ४६
देवेभ्य इति देवस्य मूर्ध्नि सम्पूजयेत् पुनः ।
सर्वेभ्यश्चैव सर्वाभ्य उदरे च समर्चयेत् ४७
नमो गणेशभक्तेभ्यस्तद्भक्तेभ्यो नमस्तथा ।
पूजितस्य गणेशस्य पादमूले तथाऽर्चयेत् ४८
अङ्गेभ्यश्चायुधेभ्यश्च भूषणेभ्यः सकृत् सकृत् ।
सर्वादिभ्यस्तथा सर्वपरिवारेभ्य इत्यपि ४९
पुष्पाञ्जलिं प्रकुर्वीत मूर्तौ देवस्य भक्तिमान् ।
तारश्रीशक्तिबीजान्ते जगद्ध्वनिपदं वदेत् ५०
म(मा)न्त्रमातर्द्वि(तद्वि)ठान्तोऽयं घण्टायां मनुरुत्तमः ।
एष रक्षाकरः श्रीमान् सर्वासुरविनाशनः ५१
अनेन घण्टामभ्यर्च्य वादयेत मनोहरम् ।
मूलादिभ्यां समन्त्राभ्यां धूपदीपौ प्रदर्शयेत् ५२
सुस्नातया सुवासाभ्यां समलङ्कृतया स्त्रिया ।

सुनिर्मलाप[व]घाते श्री(:)रक्तशालिजतण्डुलैः ५३
सुधौतैः परिपक्वौ च [क्वैश्च] पयसा गुडसर्पिषा ।
पूरितं विविधैर्मृष्टैः सूपदंशविशेषकैः ५४
मधुरापूपकदळीपनसाम्रफलैरपि ।
मधुरैरप्यपूपैश्च शष्कुलीमोदकादिभिः ५५
निवेद्यमग्रतः स्वर्णरजतस्थालिसम्भृतम् ।
कल्पयित्वाऽस्त्रमन्त्रेण सार्धं पुष्पेण संस्पृशेत् ५६
पुनः सन्त्यज्य तत्पुष्पमिति संशोध्य बुद्धिमान् ।
मन्त्रमुच्चार्य जाह्नव्या सम्प्रोक्ष्योच्चया (क्ष्या च)[क्ष्याच्चर्या]
भिमन्त्र्य च ५७
मुद्रां सुरभिसंज्ञां च मनुनाऽनेन दर्शयेत् ।
स्वशक्तिबीजविविधाभोगसाधन्यन(म)न्तरम् ५८
वीप्स्यं तिष्ठपदं भोगान् साधयेति पदद्वयम् ।
नञ्पूर्णां [नञ्पूर्वान्] परिपूर्णांश्च भोगान् पूरय युग्मकम् ॥
अकाराद्याः सन्निहित[तः]सन्निधापय च द्वयम् ।
कामबीजं पदद्वन्द्वं वदेत्सुरभिजं मनुम् ६०
अरुणकनकवर्णा साधकाभीष्टधाम्नो-
रुपरिपरिलसन्तीमन्तराळे हिताय ।
भुवनमभिचरन्तीमिष्टदां भक्तिभाजां
स्मरतु सुरभिमाद्यं [द्यां]विश्वतेजोनिधानाम् [नम्] ६१
श्रुतिमयगळितपयोधारविगळ[त्]श्रुतिसारसर्वसौन्दर्या ।
प्रणतजनाभिमताप्त्यै सुरभिर्भूयात्सदाऽत्र यजनविधौ ६२
अमृतीकरणे सर्वपदार्थस्य नियोजितम् ।
निवेद्यममृतीकृत्य समन्त्रेण यथाक्रमम् ६३
मूलेनैव समभ्यर्च्य चतुर्वारं स्पृशन् जपेत् ।
परिषिच्याथ नैवेद्यं मन्त्रं मन्त्री समर्चयेत् ६४

रमादिपञ्चबीजानि वाग्भवेन्दुघटावधौ ।
रसं चात्मपदं ङेन्तं समुच्चार्य पुनः क्रमात् ६५
रसने(ना)चेन्द्रियं चैव चतुर्थ्यन्तं समापयेत् ।
उदमन्तरसं [इदमन्नरसं] प्रोक्त्वा गृहाग पदमुच्चरेत् ६६
ङेऽन्तं ज्योतिष्पदं पश्चाच्चिदात्मपदपूर्वकम् ।
तृतीया मो[मे]दिनी वर्गा[त्] कौळिन्यास्तु चतुर्थकम् ६७
युक्तबाणस्वरं पूर्वमूर्ध्वं वै सत्रयोदशम् ।
सत्रीस्वरं(सत्रीं परं)जयिन्यन्तं हृद्वयं च समुच्चरेत् ६८
परेणैतेन मन्त्रेण मुद्रया च चिदात्मकम् ।
निवेद्यं पुरतः पुञ्जं विराट्पुरुषविग्रहे ६९
विघ्नेश्वरे परानन्दे यथा स्मृत्या(त्वा) निवेदयेत् ।
ततोऽनुज्ञाप्य देवेशमग्निकार्यं समारभेत् ७०
यथोक्तलक्षणे कुण्डे जनयित्वाऽथ पावकम् ।
तत्र यत्र[न्त्र]वदारभ्य सपीठं गणनायकम् ७१
आज्येन सकलैर्मन्त्रैर्हुत्वा चैव सकृत् सकृत् ।
जुहुयाद्यौ(द्वौ)षडन्ताय हुने[न्तेनाहुते]राज्याहुतिं भ[तिर्भवेत्]॥
चत्वारिंशच्चतुष्कृत्वो मूलेन मनुना सुधीः ।
देवीमन्त्रेण तुर्यांशं पूजामन्त्रैः सकृत् सकृत् ७३
तत्रावृतीनां मन्त्रान्ते (न्त्रेण) पूर्णाहुतिमखण्डधीः ।
मूलेन वौषडन्तेन जुहुयात् सावधानकम् ७४
अपूपलाजपृथुकसक्तिवक्षुशकलैस्तिलैः ।
नाळिकेरं च [रैश्च] कदळीपक्वैस्त्रिमधुरोक्षितैः ७५
जुहुयादिष्टसम्प्राप्त्यै द्रव्यैरेतैरथाष्टभिः ।
एकस्मिन्नाळिकेरे च कुडुपैकमिताः सिताः ७६
मध्वाज्यैकैकमाने [नं] स्यात्तदर्धे वा प्रकीर्तिते ।
अष्टाष्टमुष्टिमानाः स्युर्लाजाः पृथुकसक्तवः ७७

पर्वाणीक्ष्वष्टसंख्यानि कादळाश्चाष्टसंख्यकाः ।
तिलाः कुडुपमानाः स्युर्मोदकाश्चाष्टसंख्यया ७८
मोदकास्तुषमानाः स्युः पृथुकाः खण्डसंयुताः ।
श्वेतवर्णास्तथा लाजाः सक्तवो बहुधा कृताः ७९
निस्त्वग्रक्षाळखण्डाः स्युरष्टधा पर्वमध्यमे ।
सोदकं नाळिकेरं स्यात् पलाष्टकमितं शुभम् ८०
सिकतोपम[ल]भेदं स्यात् कादळाश्चतुरङ्गुलाः ।
एकैकमष्टधा भिन्नाः सितोदं गुडमुच्यते ८१
सुगन्धे पिङ्गलाभासा(से) मध्वाज्ये परिकीर्तिते ।
त्रिकोणं दक्षिणे कृत्वा वर्तुलत्रयसंयुतम् ८२
तदन्तरे(रं) मोदकादिद्रव्यं पूर्वादिषु न्यसेत् ।
पृथक् पात्रगतं द्रव्यं प्रत्येकं दिक्षु पूजयेत् ८३
तत्तद्देवात्मकं ध्यायन् गन्धापुष्पादिभिर्यजेत् ।
विघ्नेशोर्वीदिनेशाग्निसोमेशहरिकञ्जजाः ८४
द्रव्याणां मोदकादीनां देवताः क्रमशः स्मृताः ।
विघ्ननाशं स्थिरं कान्तिमैश्वर्यं चायुरक्षयम् ८५
विघ्नादयः प्रयच्छन्ति समृद्धिं च बहुप्रजाम्(:) ।
यजमानोऽत्र कालात्मा द्रव्यं प्रकृतिरूपकम् ८६
देवता तु विराड्रूपः पुरुषो होमकर्मणि(भिः) ।
प्राणप्रतिष्ठा कर्तव्या यषादितीतयस्य तु ? ८७
जपाद्दशांशं हुत्वा तु जपेन्मूलं समाहितः ।
देवीमन्त्रेण तुर्यांशं जुहुयादनुसञ्जपेत् ८८
विघ्नत्रयादिकुसुमनिध्यन्तानां घृताहुतिः ।
कर्तव्या देवताद्रव्यहोमसंख्यादशांश(कः)तः ८९
शिष्टानां परिवाराणामाज्येन च सकृत् सकृत् ।
पूर्वं संख्यं ? प्रधानस्य जुहुयात्पूर्ति(पूर्व)हेतवे ९०

महाव्याहृतिभिर्हुत्वा पुनर्ब्रह्मार्पणेन च ।
मनुना जुहुयाद्धोमं देवतायै समर्पयेत् ९१
दशविघ्नान् स्वमन्त्रैश्च महालक्ष्म्याव[क्ष्म्यव]सानकान् ।
चत्वारिंशच्चतुर्वारं तर्पयेत्ससिता[तं] पयः ९२
गण्डूषप्रमुखान् सर्वानुपचारान् विधाय च ।
होमं समाप्य देवं च समुद्वास्यात्मनि स्वयम् ९३
भस्मना तिलकं कृत्वा बलिं च विकिरेत्सुधीः ।
पुनरभ्येत्य देवाय निवेद्यं प्रसमर्प्य तु ९४
एवं नैवेद्यजातोद्गतलसितु[त]रसोद्दामनिर्धामभिस्त-
द्देवस्याधारवह्नौ कृतहुत[ति]विधिना हृष्टशक्त्यायतार्कान् [त्]
तन्मध्येन्दोर्ज्वलन्त्या गळदमृतमयाधारयाऽऽपूर्य सद्य-
स्तन्मज्यात्[ध्यात् सर्वलोकत्रयमिति मनसा भावयेद्विघ्नराजः[म्]
एवं हि परिभाव्यैनं विभुं सपरिवारकम् ।
पानीयमपिधानीयं दत्वा पश्चाद्विसर्जयेत् ९६
रक्ताम्भोजो ? बृहत्कुक्षिर्बृहत्कायो गजाननः ।
तस्मै कुम्भोदराख्याय दापयेत्तन्निवेदितम् ९७
गण्डूषादिस(सु)माल्यान्तं मुखवासं ततः परम् ।
करचन्दनताम्बूलपूगचूर्णेन्दुमिश्रितान् ९८
छत्रिकामपि मायूर[रीं] श्वेतच्छत्रादिचामरान् ।
एतान् स्वमूलमन्त्रेण विघ्नराजाय कल्पये[त्] ९९
स्वैर्बीजैः स्वात्मभिर्युक्तैर्गणेशायान्वितैरपि ।
इदं वो नम इत्यन्तैर्मन्त्रैस्तोयादिभिः क्रमात् १००
सम्पूज्य पुष्पपर्यन्तैः कुर्यात्पुष्पाञ्जलिं ततः ।
एवं कृत्वा स्तुवन्मन्त्री भक्त्या चैव गणेश्वरम् १
एकाग्रचित्तास्तं पश्चात् स्तवपुष्पैः समर्चयेत् ।
स्तुत्वा देवं च देवीं च गीतनृत्तादिकैरपि २

अवसानाख्यमर्घ्यं च दापयेत्सुखदं विभोः ।
भोजयेद्ब्राणांश्चैव पायसेन घृतेन च ३
यथाशीर्वादसंयुक्ता(:)[न्] तथा संस्कृत्य(सत्कृत्य)मन्त्रवित् ।
क्रियां पूजां जपश्चैव [पं चैव] देहं चापि समर्च[र्प]येत् ४
तस्मिन् ब्रह्ममये दैवे तं चैव शरणं व्रजेत् ।
यथाशक्ति स्वगुरवे देशिकेन्द्राय दक्षिणाम् ५
दापयेत्पुरुषार्थी च स्वकर्मफलसिद्धये ।
ब्रह्मार्पणाख्यमन्त्रेण तत्सर्वं पदमूलतः ६
समर्पयित्वा ....[सर्वं]स्वं शिवोऽहमिति भावयेत् ।
उद्वासयेत्ततो मन्त्री देवं सपरिवारकम् ७
सर्वेषां परिवाराणां देवे चैव लयं स्मरेत् ।
तेजोरूपं ततो ध्यात्वा देवं देवीं च मन्त्रवित् ८
तत उद्वास्य हृदये व्योमपद्मेऽथ वा स्मरेत् ।
सकळीकृत्य तं देवं ध्यायेच्च परतः परम् ९
गन्धापुष्पादिभिः पश्चादात्मन्यपि च पूजयेत् ।
इत्थं महागणपतेरीश्वरेण महार्णवे १०
उक्तमुत्तममर्चाया विधानं भक्तिसिद्धये ११
एषाऽर्चना सर्वसमृद्धिदा च विशिष्टदा साधकसत्तमानाम् ।
तस्मात्प्रकुर्याद्दिनशोऽर्चनां वै तस्मै नमस्तेऽस्तु गणेश्वराय १२

इति विश्वनाथीये विनायकोदये पञ्चमः पटलः

अथ वक्ष्यामि संक्षेपात्पूजां च महतीमिमाम् ।
अकिञ्चनस्यापि तथा विधातुं भक्तचेतसः(भक्तिचेतसः) १
सर्ववेदमयाद्यङ्गपर्यन्तां पूर्ववद्यजेत् ।
ततः पुष्पाञ्जलिं कुर्याच्चतुर्वारमनन्यधीः २
मातॄश्च लोकपालांश्च क्रमशः पूजयेत्सुधीः ।
अथवा पुष्पनिध्यन्तां त्रिविघ्नादिकमाचरेत् ३

अथवा ब्रह्मविष्णवाख्यो[यौ]नीलरुद्रौ र[द्रो]तृतीयकौ (कम्)[कः]
एते च दक्षिणे सव्ये देहस्य गळदेशतः ४
पूर्वोक्तसंख्यां गायत्रीं हृदयेऽभ्यर्च्य भक्तिमान् ।
स्थावरं जङ्गमं चैव देवस्योपरि पूजयेत् ५
देवस्य इति मन्त्रेण पूजयेत्तस्य मूर्धनि ।
सर्वेभ्यश्चैव सर्वेभ्य[र्वाभ्य] इत्यादीन् पूर्ववद्यजेत् ६
ऋत्वा [चा] पुष्पाञ्जलिं कुर्यात् चतुर्वारमनन्यधीः ।
पुनः सम्पूजयेद्भक्त्या देवं देवीं सकृत् सकृत् ७
एवमुक्तप्रकारेण गणेशं यः समर्चयेत् ।
अचलामिष्टदोत्कृष्टां श्रियं मुक्तिं प्रयच्छति ८
वनस्पतिरसोत्पन्नो गन्धाढ्यो धूप उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ स्वाहा ९
सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ नमः १०
यत्किञ्चित्कर्म हे देव सदा सुकृतदुष्कृतम् ।
तन्मे विघ्नप(प्र)दस्थस्य भुंक्ष्व क्षपय विश्वभुक् ११
विघ्नो भोक्ता [भोज्यो] विघ्नो विघ्नः सर्वमिदं जगत् ।
विघ्नो यजति भूतानि यो विघ्नः सोऽहमेव च १२
गुह्यातिगुह्यगोप्तस्त्वं(प्ता त्वं) गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादाद्धृदि स्थिता १३
मां मदीयं च सकलं मत्स्वामिने भ्यं (भ्यां)(ह्यं)[तुभ्यं] परमात्मने नमः । यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥
तं वै देव (वेद) मात्मबुद्धिप्रसादं[प्रकाशं] मुमुक्षुर्वै शरणमहं प्रपद्ये
पूजामन्त्राः समाख्याता भगवत्प्रियदायकाः ।
तारश्रीविघ्नबीजाद्याः पूर्वानुक्ताः(क्त्वा) [नूक्ताः] प्रकाशिताः
हृदावा (भा) स भक्तानुकम्पिन्नशेष-

प्रदीपस्वरूप प्रभो मानुनित्य ? ।
चिदाभासकानन्दसंवित्स्वरूप
प्रसन्नेभवक्त्र प्रसीद प्रसीद १६
चतुर्धा समुद्भूतदेह्यन्तरात्मन्
चतुर्वेदमृग्याखिलात्मन्निभे(हे)श ।
प्रपञ्चप्रवृत्त प्रभो दे[ह्ये]क(त्तप्रभेदैक)नाथ प्रसन्ने.... १७
लसच्चन्द्रमौळिस्त्रिणेत्रैकदन्त
प्रकाशातिरि[र]क्तप्रसूनाम्बराद्य [ढ्य] ।
महात्मन्महेश प्रमोद प्रसाद्य प्रसन्नेभवक्त्र प्रसीद प्रसीद १८
त्रिषट्कात्रि[श्रि]संमिश्रितेब्जे च रक्ते
सदा सन्निविष्टप्रभूतार्तिहन्तः ।
चलत्पादकर्णप्रवृत्तोदराढ्य प्रसन्नेभवक्त्र प्रसीद प्रसीद १९
कराब्जद्विषट्कप्रहेति(भेन्त्री)(ती)प्रबद्ध-
प्रहेतिप्रनष्टप्रसीदासुरौघ ।
स्फुरद्रत्नसौवर्णघाण्टात्त(क्त)कण्ठ प्रसन्ने........ २०
रमात्मन्नमोरुद्वयो(या)वासितस्याः[न्नुमारुद्रयोर्वासितस्य]
परस्तन्यपानप्रवृद्धस्वकाय ।
पवित्राभि[हि]हारो ज्वलद्दिव्यदेह प्रसन्ने........ २१
दिवानाथकोटिप्रभाभासमाने
निशानाथबिम्बोपमास्याभिरामे ।
लसत्कङ्कणोद्यत्कराब्जे द[त]ळे मां
सदा पाहि विघ्नेश विश्वप्रदीप २२
परे सारपीयूषसन्दोहशीले गुणावासभूते गरीयस्यमेये ।
चिदाभासके नित्यनिर्वाणदे मां सदा पाहि विघ्नेश विश्वप्रदीपे
अमेयेऽचले नित्यसंवित्स्वरूपे गुणातीतविद्युत्प्रभाभासमाने ।
यदा शीलदिव्यस्वरूपे शिवात्मन् शिवेचैकरूपे नमस्ये भवन्तौ ॥

चिदानन्द चिन्मात्र चैतन्यभूत प्रभो ऽशेषलोकत्रिमूर्तिस्वरूप ।
गुणातीतगुर्वाज्ञया गम्यरूप प्रभो देशिकेन्द्राङ्घ्रिभक्ति(वित)
प्रसीद २५
विशुद्धं परं ब्रह्म यं वेदसारं प्रधानस्वरूपं भवध्वंस[सि]नित्यम् ।
मनोवागतीतं शिवं नित्यबोधं महार्थं च त[पर]स्मै नमस्ते नमस्ते
इति स्तुत्वा परं देवं देवीं च परमामपि[चैव परामपि]।
पूजान्ते च स्तुतिर्नित्यं(श्चेयं) वर्तव्या च विपश्चितः [ा] २७

इति विश्वनाथीये विनायकोदये षष्ठः पटलः

अथोच्यते सम्प्रति तर्पणक्रमं महागणेशस्य यथा विधानतः ।
समस्तभवतस्य समस्तभोगदं विमुक्तिदं देवमुनीन्द्रतर्पणम् १
जलतीरं समादद्यात्[साद्य] शुचिरेकाग्रमानसः ।
ताळत्रयादिकं कृत्वा तर्पणक्रम(त्रय)मारभेत् २
पूर्ववत्तीर्थमन्त्रेति(तु)[न्त्रेण] तीर्थमावाह्य मन्त्रवित् ।
गङ्गामन्त्रेण गङ्गां च ध्यायेत् तत्र समाहितः ३
जलेनैव समभ्यर्च्य सप्तवारं मनुं जपेत् ।
विधिना चिन्तयेद्गङ्गां तेजोरूपां जलात्मिकाम् ४
गुर्वादिपीठमन्त्रान्तं नमोन्तं तर्पयेत्सकृत् ।
पुनश्च पीठमन्त्रेण दीपान्तं पूजयेत् क्रमात् ५
पीठे तु शक्तिमन्त्रेण सकृत्तार्पणमाचरेत् ।
उद्यदर्कप्रभापुञ्जप्रोद्घाटितपयोभुवाम् [वम्] ६
किञ्जल्कपुञ्जसङ्काशां सर्वसौभाग्यसुन्दरीम् ।
मदमन्थरलोलाक्षीं मत्तामतिमनोहराम् ७
कर्पूरस[श]कलोन्मिश्रताम्बूलापूरिताननाम् ।
सर्वाभरणसम्पन्नां देवीं मन्त्र[मन्त्री] विचिन्तयेत् ८
तन्मन्त्रेण तथाऽर्घ्यादिताम्बूलान्तं समर्चयेत् ।
विस्तारमुच्चरन् मूलात् तेज[ः]स्वं [स्तत्] ब्रह्मरन्ध्रकम् ९

नीत्वा बहिः प्रसन्नार्कमण्डले सन्निवेश्य तु ।
मण्डले सवितुर्बद्धदृष्टिर्मूलं समुच्चरेत् १०
संस्पृष्टार्कस्वतेजा[जो]भ्यां जृम्भिताभ्यां महाप्रभाम् ।
विग्रहं गणनाथस्य स्मरेत् परिणतं बुधः ११
व्योमगङ्गाजलक्रीडासमुद्युक्तैः सयुग्मकैः ।
क्रीडितं च परिश्रान्तं देवैः सह सवासवैः १२
ऋषिभिर्यक्षमुख्यैश्च गन्धर्वैरप्सरोगणैः ।
सिद्धचारणनागाद्यैः स्तूयमानं विचिन्तयेत् १३
तर्पयेच्च चतुर्वारं देवं मूलेन मन्त्रवित् ।
तर्पणामृतसंतुष्टो भगवान् पीठमध्यगाम् १४
साधकेन समं देवीं निरीक्ष्यागन्तुमुद्यतः ।
पृष्टा? विज्ञाय सन्द[न्दि]ष्टरत्नहैरण्यपादुके १५
आरुह्य हरदत्ताग्रहस्तदक्षिणबाहुकम् ।
वामं विष्णोः करतळे दत्वा यान्तमनुं [नु] स्मरेत् १६
रत्नपुष्पफलच्छाया वित्तिरन् [वितरन्] कल्पकाङ्घ्रिकैः [पैः] ।
रो(रौ)ग्म[रुक्म] पर्यन्तरौप्येण सोपानेन विराजि[ज]ता १७
मार्गेणावतरन्तं तमवधार्यानुगम्य च ।
वरुणेन्द्रधृतश्वेतमयूरच्छत्रशोभितम् १८
वीज्यमानं कमलया चामचा(वा)ह्य [राभ्या]मथोमया ।
आवाहनाख्यमन्त्रेण भावयेत्स्वयमेकधीः १९
सकलैः परिवारैश्च देवगन्धर्वकिन्नरैः ।
सममागतमावाह्य द्वादशान्ते विचिन्तयेत् २०
देव्याः पीठगतायास्तु तेजःपुञ्जमयं पुनः ।
भावयेत् सकलीकृत्य लिपिन्यासादिकं पुनः २१
भावयेत्सर्वमाचार्यो ध्यायेत् पूर्वोक्तवत् सुधीः ।
वेदवारं तर्पयित्वा नेत्रतर्पणमाचरेत् २२

गायत्र्यनुष्टुप्त्रिष्टुप्च्छन्दोक्ष्‍णं [च दक्षिणं] वाममूर्ध्वगम् ।
ध्यात्वा नेत्रं समूलेन नमोन्तेन प्रतर्पयेत् २३
ऊर्ध्वदृक्तर्पणेन स्यात् सर्ववैरिविनाशनम् ।
दक्षदृक्तर्पणेनेष्टसिद्धिः सम्पद्यते सदा २४
वामदृक्तर्पणेन स्यादुत्पन्नेष्टविवर्धनम् ।
सुषुम्नातर्पणादुक्तं पुरुषार्थचतुष्टयम् २५
तत्वादिलक्ष्मीपर्यन्तैर्नमोन्तैर्मनुभिः क्रमात् ।
एकैकवारं सन्तर्प्य देवं सम्पूजयेत् पुनः २६
अर्घ्याद्यैर्दीपपर्यन्तैः पायसं च निवेदयेत् ।
ततः पुरस्तात् स्वौवर्णकटाहं परिकल्पयेत् २७
तं कटाहं त्रिमध्वाक्तैरष्टद्रव्यैः प्रपूरयेत् ।
प्राणप्रतिष्ठां पूर्वोक्तप्रकार[ां] तत्र कल्पयेत् २८
अभिमृज्य [श्य] जपेन्मूलं चतुर्वारं प्रजप्य तु ।
गुर्वादिपीठपर्यन्तं द्वितीयान्तं प्रकल्पयेत् २९
मूलमन्त्रेण दशधा विभज्य दश तर्पयेत् ।
स्वपुष्करं भ्रामयन्तं तदा तं भावयेद्विभुम् ३०
तत्पुष्करस्य मूले च भ्रममाणस्य तर्पणम् ।
देवीकरोद्धृतं मूर्ध्नि साधकस्य समर्पितम् ३१
पुष्करं मन्यमानः सन् तर्पयीत विचक्षणः ३२
मूलाधारविनिःसृताद्गणपतेस्तत्पुष्करद्वारतो
मूध्नन्ति (र्धान्तं) [र्ध्ना त]त्प्रतिभिद्य ? मूलमधिगम्याधारशक्तिं
स्वकाम् । तद्वत्स्वस्य च तस्य वामसुषिरेणान्योन्यसम्मेळनात्
सम्प्राप्तामृतधारयाऽऽप्लुततनुं सन्तर्पयेत्साधकः ३३
भावयित्वाऽन्यमन्योन्यमैक्येन सुसमाहितः ।
द्विठान्ते तर्पयामीति मूलेन मनुना पुनः ३४
चत्वारिंशच्चतुर्वारं तर्पयेन्मनुवित्तमः ।

देवीमन्त्रेण च तथा मनुसंख्यं स तर्पयेत् ३५
अष्टद्रव्यमनारतार्पितमलं खादं पुरा सृक्विणी-
निर्यत्फेनपरिप्लुतास्यकमलोपद्गत्प [कवलो वल्गत्प]दाम्भोरुहः।
चञ्चच्चञ्चळिकाञ्चितोरुकरभः सन्ताडनात्कर्णयो-
र्ध्यातव्यो निजवल्लभामृगदृशा चा (मा) वीक्ष[च]माणस्त्रिभिः
एवं कृते तर्पणे तु परिवारराननुस्मरेत्। [[णोऽक्षिभिः]
विघ्नत्रयादिकल्पाङ्घ्रिपान्तान् कर्मावसानिकान् ३७
तर्पयामीति मन्त्रैः स्वैस्तर्पयेत्तु सकृत् सकृत्।
पुनर्मूलेन चत्वारि तर्पयेन्मूलदेवताम् ३८
कर्मान्ते दश विघ्नानां वरदान्तैर्मनूत्तमैः।
महालक्ष्मीं द्वितीयान्तां तर्पयेत्सावधानकम् ३९
अपूपमोदकावादौ [द्यं] द्वितीयं नवनीतकम्।
सितक्षीरे तृतीयं तु चतुर्थं मधुसक्तवः ४०
एतैः पृथक् पृथग्देवे तर्पयेच्च विचक्षणः।
तदन्ते मूलमन्त्रेण युगवारं प्रतर्पयेत् ४१
द्रव्यशेषं समस्तं च तस्मिन्नेव नियोजयेत्।
गण्डूषप्रमुखान् सर्वानुपचारान् विधाय च ४२
प्रसन्नपूजया तुष्टमभीष्टं प्रार्थयीति च [त च]।
प्रार्थितः [त] प्राप्तिसंन्तुष्टः साधकः सूर्यमण्डले ४३
प्रसन्नभूतं विघ्नेशं परं देवं समुद्वसेत्।
तिष्ठन्नञ्जलिदानं च कुर्यादेकं पुनस्तथा ४४
स्वशिरस्यञ्जलिं कृत्वा मूलमन्त्रं जपेत्पुनः।
पुनरप्यञ्जलिं दद्यादनयैवात्मविद्यया ४५
तन्मयं गणपं ध्यात्वा तां विद्यां प्रजपेत्सुधीः।
अन्तरात्मनि तत्तेजो भावयित्वा षडङ्गकृत् ४६
........? [मन्त्रन्यासाद्विशुद्धात्मा] शिवोऽहमिति भावयेत्।

अथ वक्ष्यामि संक्षेपात् चतुरावृत्तिसंज्ञितम् ४७
गुरूपदेशतो देवं चतुर्मूलेन तर्पयेत् ।
सकृद्देव्यां [वीं] तर्पयित्वा परिवारानतुस्मरेत् ४८
तर्पयित्वा चतुर्वारं मूले मूलेन मन्त्रवित् ।
सर्ववेदमयाख्यादिपुष्पनिध्यन्तकानपि ४९
तर्पयेच्च चतुर्वारं प्रत्येकं क्रमशः सुधीः ।
प्रत्येकं च चतुर्वारं देवं देवीं सकृत् सकृत् ५०
हृदयाद्यस्त्रपर्यन्तानेकैकं तर्पयेदथ ।
तदन्ते वेदसंख्यां च देवं देवीं सकृत्सुधीः ५१
शिष्टानपि परीवारान् प्रकल्पान्तान् ? प्रकल्पयेत् ।
एवं तु वर्गे वर्गे च तेषामेवं प्रकल्पयेत् ५२
इत्युक्तश्चतुरावृत्तितर्पणस्य विधिर्मया ।
भक्तानामुपकाराय सर्वसिद्ध्युपलब्धये ५३
यस्त्वैवं[स्त्वेवं] मण्डलं देवं तर्पयेन्मन्त्रवित्तमः ।
सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ५४
निखिलसुखदमेतत्तर्पणं विघ्नराज-
प्रियतुदपि (ददिमपि) [दममित]मायुः कीर्तिलक्ष्मीप्रदं च ।
अनुदिनमनुतिष्ठन् भ(मु)क्तिमानत्य(न्त्य)लङ्घ्यं
भवजलधिमतीत्येभास्यसायुज्यमेति ५५

इति विश्वनाथीये विनायकोदये सप्तमः पटलः

ततः(परं) प्रवक्ष्ये संक्षेपादत्यर्थं लक्षणादिकम् ।
एतत् सामान्यपूजाया विधिं चैवोपकारकम् १
सर्वत्र व्याप्तरूपस्य भक्त्या च परमात्मनः ।
पूजायां सम्मुखीभावो यत्तादावाहनं विदुः २
आवाहितस्य देवस्य देहे विद्ये[द्या]मये सदा ।
स्थैर्यं सद्यो ज्ञानभक्त्या स्थापनं तदुदीरितम् ३

गृहीत्वाऽनुग्रहं पूजां कर्तुं सामर्थ्यमुत्तमम् ।
यदस्य सततं तद्धि सान्निध्यं प्रोच्यते बुधैः ४
आपूजान्तात्सुसान्निध्यं यद्देवस्यामितौजसः ।
महेशस्य प्रभोर्भक्त्या सन्निरोधः स उच्यते ५
सदानन्दमयं ब्रह्म चिन्मात्रकमनू [नौ]पमम् ।
व्याप्त[प्ति]श्च सकले तस्मिश्चिन्त्यं स्यादवगुण्ठनम् ६
स्वभावतो विभिन्नानामभिन्नाय तप्र[य प्र]योजनम् ।
सभा[हा]ङ्गानामभिन्नं तदमृतीकरणं स्मृतम् ७
मुद्रया परमप्रीतो भवत्यानन्दसंज्ञया ।
परिपूर्णः शिवो देवोप्यमृतो [ते] प्लावित [ताप्यायित]स्तदा ८
मनोवाक्कायिकानां च कर्मणां वै यदर्पणम् ।
शिवेऽस्मिन् ध्यानयोगे स्यादर्घ्यादित्रयमीरितम् ९
स्रवद्भिर्द्वादशान्तस्थपद्ममण्डलतो विधोः ।
अमृतैः प्लावनं यत्तु स्नानं तत्प्रोच्यते बुधैः १०
अज्ञानध्वंसनं मत्त[न्त्र]गीतमानन्ददायकम् ।
इत्येवमुक्तं देवस्य पूजाया लक्षणं बुधैः ११
यत्कुर्वन्तीश्वरे सिद्धा........ [पूजानां यत्र] षोडश ।
तत्रै....[वै]तत् षोडशधा देहस्य च समर्पणम् १२
आवाहितस्य यस्येव [देवस्य] दाने पाद्यार्घ्ययोः सति ।
तदाऽत्र स्थित एवासावन्यथात्वन्यथा विदुः १३
बिम्बे च बिम्ब [म्बे] वै कुर्यात्पाद्यादिसकलानपि ।
एते गुरुमुखात्सिद्धा गोप्याः सर्वे विपश्चिते [ता] १४
यस्त्वेवमेव सकलं मन्त्री नित्यं समाचरेत् ।
साधितान्यपि तेनैव वश्यादीनि न संशयः १५
प्रपञ्चसारविधिना तानि कुर्यादतन्द्रितः ।
अनुग्रहाय लोकानां स्वार्थं वा मन्त्रवित्तमः १६

शैवे च वैष्णवे चैव दौर्गे चान्येषु तत्परः ।
अनेके यापि [येन केनापि] मन्त्रेण या क्रिया यत्फलाप्तये १७
ए[ये]न द्रव्येण मेधावी कारिता येन केनचित् ।
सा क्रिया तत्फलप्राप्त्यै नैतद्द्रव्येण साधकः ।
अनेन विघ्नराजस्य मन्त्रेणैव समा(दा)चरेत् १८
अस्य विघ्नेशमन्त्रस्य सिद्धो यो भक्तिमान्नरः ।
स कुर्यान्निश्चितो वाऽपि स्तम्भनाद्यभिचारिकान् १९
अश्विन्यां भौम(भानु)वारेऽपि चतुर्थ्यां वै विशेषतः ।
यजनं विघ्नराजस्य कर्तव्यं साधकेन तु २०
तद्योग्ये तु शुभे सम्यक् पूजितो येन केन वा ।
सद्यो ददाति परमां सिद्धिं तस्मै गणेश्वरः २१
व्रती सर्वप्रयत्नेन प्रतिपत्सितवारयोः ।
भक्त्या [ऽ]भुक्ता[भुक्त्वा]र्चने [नं]कुर्यात् भवेत्सर्वार्थसिद्धिदः ॥
त्रिसन्ध्यां [न्ध्यं] तर्पयेन्नित्यं चतुर्वारं जितेन्द्रियः ।
मन्त्री स सकलान् कामान् समाप्नोति न संशयः २३
चत्वारिंशच्च चत्वारि लक्षाण्यपि च यो जपेत् ।
स वै सर्वेश्वरीं(री)[रः] पूज्यो मन्त्रैः सिद्ध उदाहृतः २४
महामन्त्राग्निना दग्धं पुण्यपापं परात्परम् ।
ऐक्यतो भावयेन्मन्त्री शिवः शिववरप्रदम् २५
यः शिवः सोऽहमस्मीति योऽहं स शिव इत्यपि ।
भावयेद्देवमात्मानमैक्यतः परमेश्वरः २६
सुधामयं सुसम्पूर्णमखण्डैकरसप्रदम् ।
चिन्तयेत् सम्यगात्मानं विघ्नेशाख्यं परं पदम् २७
मूलाधारात्स्फुरिततिमिरध्वंस(सि)कायाग्निबीजं
हित्वाऽऽधाराण्यपि च सकलान्यष्टयुग्मानि तानि ।
विद्युत्प्रख्यं भवति परमव्योमपद्मं च नीत्वा

तत्सम्भूतामृतपरमयं व्याप्तदा? नन्ददायी[यि] २८
आधाराणि लसत्सरोरुहनिभावर्णात्मकान्यञ्जसां[सा] ?
षण्मूलादुदिता तटिद्गुणलते (तो) वो[तत्]द्भासमाना पुनः ।
भित्वा द्वादशकं ततः परतरं तत्षोडशान्तं तथा
सम्प्राप्य[ा]त्र सुधामयी भवति सा सत्या सदा व्यापिनी २९
उक्तं विनायकस्येदं उदयं हि महार्णवात् ।
उद्धृतं विश्वनाथाख्यपण्डितेन मनस्विना ३०
अस्मिन्नुद्धृतविघ्नेशमन्त्रः सर्वार्थसिद्धिदः ।
बहुनाऽत्र किमुक्तेन धर्मकामार्थमोक्षदः ३१
यः शुद्धो गुरुभक्ति[क्त]श्च यतश्चि[चि]त्तो दृढव्रतः ।
देवतागुरुशुश्रूषा तत्परो यस्त्वनास्तिकः ३२
आत्मानात्मविवेकज्ञो नित्यभक्तो गणेश्वरे ।
गुह्याद्गुह्यतरं मन्त्रं तस्मै यत्नेन दापयेत् ३३
न देयं नापि चान्यस्मै शिवेनेति समीरितम् ।
तस्मात् सर्वप्रयत्नेन प्रगोप्यैतत् समाचरेत् ३४
श्रीमन्नाथमहोत्तमेशपरमाचार्याच्चतुर्थः स्मृतो
यो वन्द्यः सकलागमार्थनिरतैर्योगीश्वरैः पूजितः ।
तेनोद्धृत्य महार्णवात्परिजना एतैर्गणेशोदयं
श्रीविश्वेश्वरपण्डितेन मुनिना दत्तं विभूत्यै मुदा ३५
मनोरथानां समवाप्तिहेतोः सुराः सदा यत्प्रथमे[मं] यजन्ति ।
तदप्रमेयं महदस्तु नित्यं महार्थवेधं ? [द्यं] हि मयि प्रसन्नम् ३६
भूयात्पुष्टिविनायकाङ्गज [कं मद]रतिश्रीशौरिगौरीश्वर-
क्रोडाधीशधरात्मकं त्रिजगतामाद्यं विशिष्टार्थदम् ।
हैरम्बं हतकल्मषौघममलं निःशेषसत्वोदयं
दास्या [स्याच्चा]शेषगुरोर्वपुः प्रतिदिनं नः श्रेयसे भूयसे ३७

इति महार्णवोद्धृते विश्वनाथीये विनायकोदयेऽष्टमः पटलः

विनायकोदयः सम्पूर्णः

## लक्ष्मीकल्पः

अथ लक्ष्मीं प्रवक्ष्यामि गणेशाङ्ग[ङ्क]निवासिनीम् ।
देशकालकलातीतजगदानन्दवर्धिनीम् १
तथा ऋषिस्तथा च्छन्दो महालक्ष्मीस्तु देवता ।
श्रीं बीजमथ ह्रीं शक्तिः स्वाहा कीलकमुच्यते २
विनियोगः सर्वसिद्धिः न्यासं [सो] द्वाभ्यां कराङ्गयोः ३
ध्यानं– मुक्ताभां दिव्यवस्त्रां मृगमदतिलकां फुल्लकल्हारमालां
केयूरैर्मेखलाद्यैर्नवमणि (र्मणिगण) खचितैर्भूषणैर्भासमानाम् ।
कर्पूरामोदवक्त्रामपरिमितकृपां पूर्णनेत्रा[चन्द्रा]रविन्दां
श्रीलक्ष्मीपद्महस्तां जितपतिहृदयां विश्वभूत्यै नमामि ४
मन्त्रोद्धारं– प्रणवं च महालक्ष्मीं महामायां च मन्मथम् ।
ग्लौमों नमो भगवति महालक्ष्मीमतः परम् ५
वरवरदे ततः पश्चात् तत्र श्रीं च विभूतये ।
वह्निजायायुतं मन्त्रमष्टाविंशतिवर्णकम् ६
अष्टाविंशच्छतजपं कुर्यादनुदिनं सुधीः ।
अष्टाविंशद्दिनादेव लभेदखिलमद्भुतम् ७
मध्ये तारं च लक्ष्मीं हुतवहभवने शक्तिमारक्षमाणान्
सप्तारे सप्तवर्णान् स्वरदळकमले शिष्टवर्णान् क्रमेण ।
तद्बाह्ये चन्द्रवर्णं तदनुपुटमहीकोणलक्ष्मीं समस्तं
त्रैलोक्यैश्वर्यजालप्रदमिदमतुळं सर्वसौभाग्ययन्त्रम् ८
शातकुम्भमये पत्रे सर्वसौभाग्ययन्त्रकम् ।
समालिख्य मरु ? स्थाप्य शनैर्जप्त्वा विधानतः ९
उत्तमाङ्गेन कर्णेन बाहुमूलेन वा सुधीः ।
निवहेद्यन्त्रराजं तु निखिलैश्वर्यसिद्धये १०
धान्यं लभेद्धान्यकामी धनकामी धनं लभेत् ।
क्षेत्रं लभेत्क्षेत्रकामी स्त्रीकामी तु लभेत् स्त्रियम् ११

पुत्रं लभेत् पुत्रकामी राज्यकामी तु राज्यकम् ।
मैत्रं लभेन्मैत्रकामी बन्धुकामी च बान्धवम् १२
सर्वं लभेत्सर्वकामी झटिति श्रीप्रसादतः ।
लक्ष्मीविद्याश्रितो यस्तु स भवेत् सर्ववन्दितः १३
स गणेशः[श] प्रियतमः प्रियोऽस्माकं विशेषतः ।
सौभाग्ययन्त्रकावासं सिद्धिक्षेत्रमितीरितम् १४
सौभाग्ययन्त्रकं यस्तु सप्तस्थाने ? तु संस्मरेत् ।
लक्ष्मीविद्यां जपेन्नित्यं अष्टाविंशच्छतं सुधीः १५
उपरागे समारभ्य आधारे सोमसूर्ययोः ।
तथा जपेदाग्रहणं दृढव्रतमतन्द्रितः १६
सहस्रकोशविस्तीर्णां सर्वसस्यविशालिनीम् ।
अकण्टकमहीं प्राप्य भोगभाग्यः(गी)[भाक् स]सुखी भवेत् १७
यावत्तु साधितं पुण्यं तत्सहस्रगुणं फलम् ।
लब्धराज्ये [ज्यो]ऽनुगैर्वर्गैर्लक्ष्मीविद्याश्रिते गु....?[तो भवेत्] ॥
दुःशीलानामकान्तानां दुष्कर्मनिरतात्मनाम् ।
कृतघ्नानामधीराणां पशुघ्नानां यवीयसाम् १९
अदृष्टानामथान्या[न्त्या]नां ? लक्ष्मीविद्यां न दर्शयेत् ।
खलेन वा तस्करेण कपटानुनयेन वा २०
न गृह्णीयात् न गृह्णीयात् न गृह्णीयात्कदाचन ।
दुष्टधीर्यस्तु गृह्णाति गुरुवक्त्राच्च पुस्तकात् २१
तं दहत्याशु सा लक्ष्मीरनुगान्वयसंयुतम् ।
तस्मात्सर्वप्रयत्नेन गोपयेत्पुस्तकं मनुम् २२
गोपनात्सर्वसिद्धिः स्याद्दिव्यबीजागमं यथा २३

इति महाशैवमन्त्रे अतिरहस्ये आकाशभैरवीकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण प्रोक्ते महागणपतिविधाने लक्ष्मीविद्याविधिर्नाम नवमी पीठिका ।

## एतत्कर्तृका ग्रन्थाः

### प्रकाशिताः

१. क्षयमासमीमांसा
२. गुरुनरसिंहसुप्रभातम्
कर्णाटकभाषाभावार्थोपेतम्
३. भारतीयधर्मदर्शन (कर्णाटकभाषायाम्)
४. अनुष्ठानपद्धतिः
५. क्रियासारः
६. लक्षणसंहिता
७. वासिष्ठसंहिता
८. विनायकोदयः

### प्रकाशनीयाः

१. ऋग्वेदीयनित्यानुष्ठानपद्धतिः
२. व्रतसमुच्चयः

---

प्राप्तिस्थानम् :
चतुःशास्त्रविद्वान्
कै. वासुदेव सोमयाजी
१४६९/१, कृष्णमूर्तिपुरम्, मैसूरु–५७० ००४

*Copies can be had of :*
K. VASUDEVA SOMAYAJI
1469/1, Krishnamurthy Puram, Mysore - 570 004